.. Ashtadhyayi or Sutrapath of Panini ..

# ॥ पाणिनीकृत अष्टाध्यायी एवं सूत्रपाठ ॥

१.१.१ वृद्धिरादैच् ।
१.१.२ अदेङ् गुणः ।
१.१.३ इको गुणवृद्धी ।
१.१.४ न धातुलोप आर्धधातुके ।
१.१.५ ग्क्ङिति च ।
१.१.६ दीधीवेवीटाम् ।
१.१.७ हलोऽनन्तराः संयोगः ।
१.१.८ मुखनासिकावचनोऽनुनासिकः ।
१.१.९ तुल्यास्यप्रयत्नं सवर्णम् ।
१.१.१० नाज्झलौ ।
१.१.११ ईदूदेद्द्विवचनं प्रगृह्यम् ।
१.१.१२ अदसो मात् ।
१.१.१३ शे ।
१.१.१४ निपात एकाजनाङ् ।
१.१.१५ ओत् ।
१.१.१६ सम्बुद्धौ शाकल्यस्येतावनार्षे ।
१.१.१७ उञः ।
१.१.१८ ऊँ ।
१.१.१९ ईदूतौ च सप्तम्यर्थे ।
१.१.२० दाधा घ्वदाप् ।
१.१.२१ आद्यन्तवदेकस्मिन् ।
१.१.२२ तरप्तमपौ घः ।
१.१.२३ बहुगणवतुडति संख्या ।
१.१.२४ ष्णान्ता षट् ।
१.१.२५ डति च ।
१.१.२६ क्तक्तवतू निष्ठा ।
१.१.२७ सर्वादीनि सर्वनामानि ।
१.१.२८ विभाषा दिक्समासे बहुव्रीहौ ।
१.१.२९ न बहुव्रीहौ ।
१.१.३० तृतीयासमासे ।
१.१.३१ द्वन्द्वे च ।
१.१.३२ विभाषा जसि ।
१.१.३३ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ।
१.१.३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ।
१.१.३५ स्वमज्ञातिधनाख्यायाम् ।
१.१.३६ अन्तरं बहिर्योगोपसंव्यानयोः ।
१.१.३७ स्वरादिनिपातमव्ययम् ।
१.१.३८ तद्धितश्चासर्वविभक्तिः ।
१.१.३९ कृन्मेजन्तः ।
१.१.४० क्त्वातोसुन्कसुनः ।
१.१.४१ अव्ययीभावश्च ।
१.१.४२ शि सर्वनामस्थानम् ।
१.१.४३ सुडनपुंसकस्य ।
१.१.४४ न वेति विभाषा ।
१.१.४५ इग्यणः सम्प्रसारणम् ।
१.१.४६ आद्यन्तौ टकितौ ।
१.१.४७ मिदचोऽन्त्यात्परः ।
१.१.४८ एच इग्घ्रस्वादेशे ।
१.१.४९ षष्ठी स्थानेयोगा ।
१.१.५० स्थानेऽन्तरतमः ।
१.१.५१ उरण् रपरः ।
१.१.५२ अलोऽन्त्यस्य ।
१.१.५३ ङिच्च ।
१.१.५४ आदेः परस्य ।
१.१.५५ अनेकाल्शित्सर्वस्य ।
१.१.५६ स्थानिवदादेशोऽनल्विधौ ।
१.१.५७ अचः परस्मिन् पूर्वविधौ ।
१.१.५८ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घ-जश्चर्विधिषु ।
१.१.५९ द्विर्वचनेऽचि ।
१.१.६० अदर्शनं लोपः ।
१.१.६१ प्रत्ययस्य लुक्श्लुलुपः ।
१.१.६२ प्रत्ययलोपे प्रत्ययलक्षणम् ।
१.१.६३ न लुमताऽङ्गस्य ।
१.१.६४ अचोऽन्त्यादि टि ।
१.१.६५ अलोऽन्त्यात् पूर्व उपधा ।
१.१.६६ तस्मिन्निति निर्दिष्टे पूर्वस्य ।
१.१.६७ तस्मादित्युत्तरस्य ।
१.१.६८ स्वं रूपं शब्दस्याशब्दसंज्ञा ।
१.१.६९ अणुदित् सवर्णस्य चाप्रत्ययः ।
१.१.७० तपरस्तत्कालस्य ।
१.१.७१ आदिरन्त्येन सहेता ।
१.१.७२ येन विधिस्तदन्तस्य ।
१.१.७३ वृद्धिर्यस्याचामादिस्तद् वृद्धम् ।

१.१.७४ त्यदादीनि च ।
१.१.७५ एङ् प्राचां देशे ।
१.२.१ गाङ्कुटादिभ्योऽञ्णिन्ङ् इत् ।
१.२.२ विज इट् ।
१.२.३ विभाषोर्णोः ।
१.२.४ सार्वधातुकमपित् ।
१.२.५ असंयोगाल्लिट् कित् ।
१.२.६ ईन्धिभवतिभ्यां च ।
१.२.७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ।
१.२.८ रुदविदमुषग्रहिस्वपिप्रच्छः सँश्च ।
१.२.९ इको झल् ।
१.२.१० हलन्ताच्च ।
१.२.११ लिङ्सिचावात्मनेपदेषु ।
१.२.१२ उश्च ।
१.२.१३ वा गमः ।
१.२.१४ हनः सिच् ।
१.२.१५ यमो गन्धने ।
१.२.१६ विभाषोपयमने ।
१.२.१७ स्था घ्वोरिच्च ।
१.२.१८ न क्त्वा सेट् ।
१.२.१९ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ।
१.२.२० मृषस्तितिक्षायाम् ।
१.२.२१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ।
१.२.२२ पूङः क्त्वा च ।
१.२.२३ नोपधात्थफान्ताद्वा ।
१.२.२४ वञ्चिलुञ्च्यृतश्च ।
१.२.२५ तृषिमृषिकृशेः काश्यपस्य ।
१.२.२६ रलो व्युपधाद्धलादेः संश्च ।
१.२.२७ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।
१.२.२८ अचश्च ।
१.२.२९ उच्चैरुदात्तः ।
१.२.३० नीचैरनुदात्तः ।
१.२.३१ समाहारः स्वरितः ।
१.२.३२ तस्यादित उदात्तमर्धह्रस्वम् ।
१.२.३३ एकश्रुति दूरात् सम्बुद्धौ ।
१.२.३४ यज्ञकर्मण्यजपन्यूङ्खसामसु ।
१.२.३५ उच्चैस्तरां वा वषट्कारः ।
१.२.३६ विभाषा छन्दसि ।
१.२.३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ।
१.२.३८ देवब्रह्मणोरनुदात्तः ।
१.२.३९ स्वरितात् संहितायामनुदात्तानाम् ।
१.२.४० उदात्तस्वरितपरस्य सन्नतरः ।
१.२.४१ अपृक्त एकाल् प्रत्ययः ।
१.२.४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ।
१.२.४३ प्रथमानिर्दिष्टं समास उपसर्जनम् ।
१.२.४४ एकविभक्ति चापूर्वनिपाते ।
१.२.४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ।
१.२.४६ कृत्तद्धितसमासाश्च ।
१.२.४७ ह्रस्वो नपुंसके प्रातिपदिकस्य ।
१.२.४८ गोस्त्रियोरुपसर्ज्जनस्य ।
१.२.४९ लुक् तद्धितलुकि ।
१.२.५० इद्गोण्याः ।
१.२.५१ लुपि युक्तवद्व्यक्तिवचने ।
१.२.५२ विशेषणानां चाजातेः ।
१.२.५३ तदशिष्यं संज्ञाप्रमाणत्वात् ।
१.२.५४ लुब्योगाप्रख्यानात् ।
१.२.५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् ।
१.२.५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ।
१.२.५७ कालोपसर्जने च तुल्यम् ।
१.२.५८ जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ।
१.२.५९ अस्मदो द्वयोश्च ।
१.२.६० फल्गुनीप्रोष्ठपदानां च नक्षत्रे ।
१.२.६१ छन्दसि पुनर्वस्वोरेकवचनम् ।
१.२.६२ विशाखयोश्च ।
१.२.६३ तिष्यपुनर्वस्वोर्नक्षत्रद्वंद्वे बहुवचनस्य
द्विवचनं नित्यम् ।
१.२.६४ सरूपाणामेकशेष एकविभक्तौ ।
१.२.६५ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ।
१.२.६६ स्त्री पुंवच्च ।
१.२.६७ पुमान् स्त्रिया ।
१.२.६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ।
१.२.६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।
१.२.७० पिता मात्रा ।
१.२.७१ श्वशुरः श्वश्र्वा ।
१.२.७२ त्यदादीनि सर्वैर्नित्यम् ।
१.२.७३ ग्राम्यपशुसंघेषु अतरुणेषु स्त्री ।
१.३.१ भूवादयो धातवः ।
१.३.२ उपदेशेऽजनुनासिक इत् ।
१.३.३ हलन्त्यम् ।
१.३.४ न विभक्तौ तुस्माः ।
१.३.५ आदिर्ञिटुडवः ।
१.३.६ षः प्रत्ययस्य ।
१.३.७ चुटू ।
१.३.८ लशक्वतद्धिते ।
१.३.९ तस्य लोपः ।
१.३.१० यथासंख्यम् अनुदेशः समानाम् ।

१.३.११ स्वरितेनाधिकारः ।
१.३.१२ अनुदात्तङित आत्मनेपदम् ।
१.३.१३ भावकर्म्मणोः ।
१.३.१४ कर्त्तरि कर्म्मव्यतिहारे ।
१.३.१५ न गतिहिंसार्थेभ्यः ।
१.३.१६ इतरेतरान्योन्योपपदाच्च ।
१.३.१७ नेर्विशः ।
१.३.१८ परिव्यवेभ्यः क्रियः ।
१.३.१९ विपराभ्यां जेः ।
१.३.२० आङो दोऽनास्यविहरणे ।
१.३.२१ क्रीडोऽनुसम्परिभ्यश्च ।
१.३.२२ समवप्रविभ्यः स्थः ।
१.३.२३ प्रकाशनस्थेयाख्ययोश्च ।
१.३.२४ उदोऽनूर्द्ध्वकर्मणि ।
१.३.२५ उपान्मन्त्रकरणे ।
१.३.२६ अकर्मकाच्च ।
१.३.२७ उद्विभ्यां तपः ।
१.३.२८ आङो यमहनः ।
१.३.२९ समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ।
१.३.३० निसमुपविभ्यो ह्वः ।
१.३.३१ स्पर्द्धायामाङः ।
१.३.३२ गन्धनावक्षेपणसेवनसाहसिक्य-
प्रतियत्नप्रकथनोपयोगेषु कृञः ।
१.३.३३ अधेः प्रसहने ।
१.३.३४ वेः शब्दकर्म्मणः ।
१.३.३५ अकर्मकाच्च ।
१.३.३६ सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ।
१.३.३७ कर्तृस्थे चाशरीरे कर्मणि ।
१.३.३८ वृत्तिसर्गतायनेषु क्रमः ।
१.३.३९ उपपराभ्याम् ।
१.३.४० आङ उद्गमने ।
१.३.४१ वेः पादविहरणे ।
१.३.४२ प्रोपाभ्यां समर्थाभ्याम् ।
१.३.४३ अनुपसर्गाद्वा ।
१.३.४४ अपह्नवे ज्ञः ।
१.३.४५ अकर्मकाच्च ।
१.३.४६ सम्प्रतिभ्यामनाध्याने ।
१.३.४७ भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ।
१.३.४८ व्यक्तवाचां समुच्चारणे ।
१.३.४९ अनोरकर्मकात् ।
१.३.५० विभाषा विप्रलापे ।
१.३.५१ अवाद्ग्रः ।
१.३.५२ समः प्रतिज्ञाने ।
१.३.५३ उदश्चरः सकर्मकात् ।
१.३.५४ समस्तृतीयायुक्तात् ।
१.३.५५ दाणश्च सा चेच्चतुर्थ्यर्थे ।
१.३.५६ उपाद्यमः स्वकरणे ।
१.३.५७ ज्ञाश्रुस्मृदृशां सनः ।
१.३.५८ नानोर्ज्ञः ।
१.३.५९ प्रत्याङ्भ्यां श्रुवः ।
१.३.६० शदेः शितः ।
१.३.६१ म्रियतेर्लुङ्लिङोश्च ।
१.३.६२ पूर्ववत् सनः ।
१.३.६३ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ।
१.३.६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु ।
१.३.६५ समः क्ष्णुवः ।
१.३.६६ भुजोऽनवने ।
१.३.६७ णेरणौ यत् कर्म णौ चेत् स कर्ताऽनाध्याने ।
१.३.६८ भीस्म्योर्हेतुभये ।
१.३.६९ गृधिवञ्च्योः प्रलम्भने ।
१.३.७० लियः सम्माननशालिनीकरणयोश्च ।
१.३.७१ मिथ्योपपदात् कृञोऽभ्यासे ।
१.३.७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले ।
१.३.७३ अपाद्वदः ।
१.३.७४ णिचश्च ।
१.३.७५ समुदाङ्भ्यो यमोऽग्रन्थे ।
१.३.७६ अनुपसर्गाज्ज्ञः ।
१.३.७७ विभाषोपपदेन प्रतीयमाने ।
१.३.७८ शेषात् कर्तरि परस्मैपदम् ।
१.३.७९ अनुपराभ्यां कृञः ।
१.३.८० अभिप्रत्यतिभ्यः क्षिपः ।
१.३.८१ प्राद्वहः ।
१.३.८२ परेर्मृषः ।
१.३.८३ व्याङ्परिभ्यो रमः ।
१.३.८४ उपाच्च ।
१.३.८५ विभाषाऽकर्मकात् ।
१.३.८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ।
१.३.८७ निगरणचलनार्थेभ्यः ।
१.३.८८ अणावकर्मकाच्चित्तवत्कर्तृकात् ।
१.३.८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ।
१.३.९० वा क्यषः ।
१.३.९१ द्युद्भ्यो लुङि ।
१.३.९२ वृद्भ्यः स्यसनोः ।
१.३.९३ लुटि च क्लृपः ।
१.४.१ आ कडारादेका संज्ञा ।

१.४.२ विप्रतिषेधे परं कार्यम् ।
१.४.३ यू स्त्र्याख्यौ नदी ।
१.४.४ नेयङुवङ्स्थानावस्त्री ।
१.४.५ वाऽऽमि ।
१.४.६ ङिति ह्रस्वश्च ।
१.४.७ शेषो घ्यसखि ।
१.४.८ पतिः समास एव ।
१.४.९ षष्ठीयुक्तश्छन्दसि वा ।
१.४.१० ह्रस्वं लघु ।
१.४.११ संयोगे गुरु ।
१.४.१२ दीर्घं च ।
१.४.१३ यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ।
१.४.१४ सुप्तिङन्तं पदम् ।
१.४.१५ नः क्ये ।
१.४.१६ सिति च ।
१.४.१७ स्वादिष्वसर्वनमस्थाने ।
१.४.१८ यचि भम् ।
१.४.१९ तसौ मत्वर्थे ।
१.४.२० अयस्मयादीनि च्छन्दसि ।
१.४.२१ बहुषु बहुवचनम् ।
१.४.२२ द्व्येकयोर्द्विवचनैकवचने ।
१.४.२३ कारके ।
१.४.२४ ध्रुवमपायेऽपादानम् ।
१.४.२५ भीत्रार्थानां भयहेतुः ।
१.४.२६ पराजेरसोढः ।
१.४.२७ वारणार्थानां ईप्सितः ।
१.४.२८ अन्तर्द्धौ येनादर्शनमिच्छति ।
१.४.२९ आख्यातोपयोगे ।
१.४.३० जनिकर्तुः प्रकृतिः ।
१.४.३१ भुवः प्रभवः ।
१.४.३२ कर्मणा यमभिप्रैति स सम्प्रदानम् ।
१.४.३३ रुच्यर्थानां प्रीयमाणः ।
१.४.३४ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ।
१.४.३५ धारेरुत्तमर्णः ।
१.४.३६ स्पृहेरीप्सितः ।
१.४.३७ क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः ।
१.४.३८ क्रुधद्रुहोरुपसृष्टयोः कर्म ।
१.४.३९ राधीक्ष्योर्यस्य विप्रश्नः ।
१.४.४० प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ।
१.४.४१ अनुप्रतिगृणश्च ।
१.४.४२ साधकतमं करणम् ।
१.४.४३ दिवः कर्म च ।
१.४.४४ परिक्रयणे सम्प्रदानमन्यतरस्याम् ।
१.४.४५ आधारोऽधिकरणम् ।
१.४.४६ अधिशीङ्स्थाऽऽसां कर्म ।
१.४.४७ अभिनिविशश्च ।
१.४.४८ उपान्वध्याङ्वसः ।
१.४.४९ कर्तुरीप्सिततमं कर्म ।
१.४.५० तथायुक्तं चानिप्सीतम् ।
१.४.५१ अकथितं च ।
१.४.५२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ ।
१.४.५३ हृक्रोरन्यतरस्याम् ।
१.४.५४ स्वतन्त्रः कर्ता ।
१.४.५५ तत्प्रयोजको हेतुश्च ।
१.४.५६ प्राग्रीश्वरान्निपाताः ।
१.४.५७ चादयोऽसत्त्वे ।
१.४.५८ प्रादयः ।
१.४.५९ उपसर्गाः क्रियायोगे ।
१.४.६० गतिश्च ।
१.४.६१ ऊर्यादिच्विडाचश्च ।
१.४.६२ अनुकरणं चानितिपरम् ।
१.४.६३ आदरानादरयोः सदसती ।
१.४.६४ भूषणेऽलम् ।
१.४.६५ अन्तरपरिग्रहे ।
१.४.६६ कणेमनसी श्रद्धाप्रतीघाते ।
१.४.६७ पुरोऽव्ययम् ।
१.४.६८ अस्तं च ।
१.४.६९ अच्छ गत्यर्थवदेषु ।
१.४.७० अदोऽनुपदेशे ।
१.४.७१ तिरोऽन्तर्द्धौ ।
१.४.७२ विभाषा कृञि ।
१.४.७३ उपाजेऽन्वाजे ।
१.४.७४ साक्षात्प्रभृतीनि च ।
१.४.७५ अनत्याधान उरसिमनसी ।
१.४.७६ मध्येपदेनिवचने च ।
१.४.७७ नित्यं हस्ते पाणावुपयमने ।
१.४.७८ प्राध्वं बन्धने ।
१.४.७९ जीविकोपनिषदावौपम्ये ।
१.४.८० ते प्राग्धातोः ।
१.४.८१ छन्दसि परेऽपि ।
१.४.८२ व्यवहिताश्च ।
१.४.८३ कर्मप्रवचनीयाः ।
१.४.८४ अनुर्लक्षणे ।
१.४.८५ तृतीयाऽर्थे ।
१.४.८६ हीने ।

१.४.८७ उपोऽधिके च ।
१.४.८८ अपपरी वर्जने ।
१.४.८९ आङ् मर्यादावचने ।
१.४.९० लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः ।
१.४.९१ अभिरभागे ।
१.४.९२ प्रतिः प्रतिनिधिप्रतिदानयोः ।
१.४.९३ अधिपरी अनर्थकौ ।
१.४.९४ सुः पूजायाम् ।
१.४.९५ अतिरतिक्रमणे च ।
१.४.९६ अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ।
१.४.९७ अधिरीश्वरे ।
१.४.९८ विभाषा कृञि ।
१.४.९९ लः परस्मैपदम् ।
१.४.१०० तङानावात्मनेपदम् ।
१.४.१०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ।
१.४.१०२ तान्येकवचनद्विवचनबहुवचनान्येकशः ।
१.४.१०३ सुपः ।
१.४.१०४ विभक्तिश्च ।
१.४.१०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ।
१.४.१०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ।
१.४.१०७ अस्मद्युत्तमः ।
१.४.१०८ शेषे प्रथमः ।
१.४.१०९ परः संनिकर्षः संहिता ।
१.४.११० विरामोऽवसानम् ।

---

२.१.१ समर्थः पदविधिः ।
२.१.२ सुबामन्त्रिते पराङ्गवत् स्वरे ।
२.१.३ प्राक् कडारात् समासः ।
२.१.४ सह सुपा ।
२.१.५ अव्ययीभावः ।
२.१.६ अव्ययं विभक्तिसमीपसमृद्धि-
व्यृद्ध्यर्थाभावात्ययासम्प्रति-
शब्दप्रादुर्भावपश्चाद्यथाऽऽनुपूर्व्ययौगपद्यसादृश्य-
सम्पत्तिसाकल्यान्तवचनेषु ।
२.१.७ यथाऽसादृये ।
२.१.८ यावदवधारणे ।
२.१.९ सुप्प्रतिना मात्राऽर्थे ।
२.१.१० अक्षशलाकासंख्याः परिणा ।
२.१.११ विभाषा ।
२.१.१२ अपपरिबहिरञ्चवः पञ्चम्या ।
२.१.१३ आङ् मर्यादाऽभिविध्योः ।
२.१.१४ लक्षणेनाभिप्रती आभिमुख्ये ।
२.१.१५ अनुर्यत्समया ।
२.१.१६ यस्य चायामः ।
२.१.१७ तिष्ठद्गुप्रभृतीनि च ।
२.१.१८ पारे मध्ये षष्ठ्या वा ।
२.१.१९ संख्या वंश्येन ।
२.१.२० नदीभिश्च ।
२.१.२१ अन्यपदार्थे च संज्ञायाम् ।
२.१.२२ तत्पुरुषः ।
२.१.२३ द्विगुश्च ।
२.१.२४ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ।
२.१.२५ स्वयं क्तेन ।
२.१.२६ खट्वा क्षेपे ।
२.१.२७ सामि ।
२.१.२८ कालाः ।
२.१.२९ अत्यन्तसंयोगे च ।
२.१.३० तृतीया तत्कृतार्थेन गुणवचनेन ।
२.१.३१ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।
२.१.३२ कर्तृकरणे कृता बहुलम् ।
२.१.३३ कृत्यैरधिकार्थवचने ।
२.१.३४ अन्नेन व्यञ्जनम् ।
२.१.३५ भक्ष्येण मिश्रीकरणम् ।
२.१.३६ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ।
२.१.३७ पञ्चमी भयेन ।
२.१.३८ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ।
२.१.३९ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ।
२.१.४० सप्तमी शौण्डैः ।
२.१.४१ सिद्धशुष्कपक्वबन्धैश्च ।
२.१.४२ ध्वाङ्क्षेण क्षेपे ।
२.१.४३ कृत्यैर्ऋणे ।
२.१.४४ संज्ञायाम् ।
२.१.४५ क्तेनाहोरात्रावयवाः ।
२.१.४६ तत्र ।
२.१.४७ क्षेपे ।
२.१.४८ पात्रेसमितादयश्च ।
२.१.४९ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ।
२.१.५० दिक्संख्ये संज्ञायाम् ।
२.१.५१ तद्धितार्थोत्तरपदसमाहारे च ।
२.१.५२ संख्यापूर्वो द्विगुः ।
२.१.५३ कुत्सितानि कुत्सनैः ।
२.१.५४ पापाणके कुत्सितैः ।
२.१.५५ उपमानानि सामान्यवचनैः ।
२.१.५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।
२.१.५७ विशेषणं विशेष्येण बहुलम् ।
२.१.५८ पूर्वापरप्रथमचरमजघन्यसमान-
मध्यमध्यमवीराश्च ।

२.१.५९ श्रेण्यादयः कृतादिभिः ।
२.१.६० क्तेन नञ्विशिष्टेनानञ् ।
२.१.६१ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ।
२.१.६२ वृन्दारकनागकुञ्जरैः पूज्यमानम् ।
२.१.६३ कतरकतमौ जातिपरिप्रश्ने ।
२.१.६४ किं क्षेपे ।
२.१.६५ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशा-
वेहत्बष्कयणीप्रवक्तृ- श्रोत्रियाध्यापकधूर्तैर्जातिः ।
२.१.६६ प्रशंसावचनैश्च ।
२.१.६७ युवा खलतिपलितवलिनजरतीभिः ।
२.१.६८ कृत्यतुल्याख्या अजात्या ।
२.१.६९ वर्णो वर्णेन ।
२.१.७० कुमारः श्रमणाऽऽदिभिः ।
२.१.७१ चतुष्पादो गर्भिण्या ।
२.१.७२ मयूरव्यंसकादयश्च ।
२.२.१ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ।
२.२.२ अर्धं नपुंसकम् ।
२.२.३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ।
२.२.४ प्राप्तापन्ने च द्वितीयया ।
२.२.५ कालाः परिमाणिना ।
२.२.६ नञ् ।
२.२.७ ईषदकृता ।
२.२.८ षष्ठी ।
२.२.९ याजकादिभिश्च ।
२.२.१० न निर्धारणे ।
२.२.११ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ।
२.२.१२ क्तेन च पूजायाम् ।
२.२.१३ अधिकरणवाचिना च ।
२.२.१४ कर्म्मणि च ।
२.२.१५ तृजकाभ्यां कर्तरि ।
२.२.१६ कर्त्तरि च ।
२.२.१७ नित्यं क्रीडाजीविकयोः ।
२.२.१८ कुगतिप्रादयः ।
२.२.१९ उपपदमतिङ् ।
२.२.२० अमैवाव्ययेन ।
२.२.२१ तृतीयाप्रभृतीन्यन्यतरस्याम् ।
२.२.२२ क्त्वा च ।
२.२.२३ शेषो बहुव्रीहिः ।
२.२.२४ अनेकमन्यपदार्थे ।
२.२.२५ संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ।
२.२.२६ दिङ्नामान्यन्तराले ।
२.२.२७ तत्र तेनेदमिति सरूपे ।
२.२.२८ तेन सहेति तुल्ययोगे ।
२.२.२९ चार्थे द्वंद्वः ।
२.२.३० उपसर्जनं पूर्वम् ।
२.२.३१ राजदन्तादिषु परम् ।
२.२.३२ द्वंद्वे घि ।
२.२.३३ अजाद्यदन्तम् ।
२.२.३४ अल्पाच्तरम् ।
२.२.३५ सप्तमीविशेषणे बहुव्रीहौ ।
२.२.३६ निष्ठा ।
२.२.३७ वाऽऽहिताग्न्यादिषु ।
२.२.३८ कडाराः कर्मधराये ।
२.३.१ अनभिहिते ।
२.३.२ कर्मणि द्वितीया ।
२.३.३ तृतीया च होश्छन्दसि ।
२.३.४ अन्तराऽन्तरेण युक्ते ।
२.३.५ कालाध्वनोरत्यन्तसंयोगे ।
२.३.६ अपवर्गे तृतीया ।
२.३.७ सप्तमीपञ्चम्यौ कारकमध्ये ।
२.३.८ कर्मप्रवचनीययुक्ते द्वितीया ।
२.३.९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ।
२.३.१० पञ्चमी अपाङ्परिभिः ।
२.३.११ प्रतिनिधिप्रतिदाने च यस्मात् ।
२.३.१२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ।
२.३.१३ चतुर्थी सम्प्रदाने ।
२.३.१४ क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।
२.३.१५ तुमर्थाच्च भाववचनात् ।
२.३.१६ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ।
२.३.१७ मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ।
२.३.१८ कर्तृकरणयोस्तृतीया ।
२.३.१९ सहयुक्तेऽप्रधाने ।
२.३.२० येनाङ्गविकारः ।
२.३.२१ इत्थंभूतलक्षणे ।
२.३.२२ संज्ञोऽन्यतरस्यां कर्मणि ।
२.३.२३ हेतौ ।
२.३.२४ अकर्तर्यृणे पञ्चमी ।
२.३.२५ विभाषा गुणेऽस्त्रियाम् ।
२.३.२६ षष्ठी हेतुप्रयोगे ।
२.३.२७ सर्वनाम्नस्तृतीया च ।
२.३.२८ अपादाने पञ्चमी ।
२.३.२९ अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते ।
२.३.३० षष्ठ्यतसर्थप्रत्ययेन ।
२.३.३१ एनपा द्वितीया ।
२.३.३२ पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् ।
२.३.३३ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ।

२.३.३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ।
२.३.३५ दूरान्तिकार्थेभ्यो द्वितीया च ।
२.३.३६ सप्तम्यधिकरणे च ।
२.३.३७ यस्य च भावेन भावलक्षणम् ।
२.३.३८ षष्ठी चानादरे ।
२.३.३९ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ।
२.३.४० आयुक्तकुशलाभ्यां चासेवायाम् ।
२.३.४१ यतश्च निर्धारणम् ।
२.३.४२ पञ्चमी विभक्ते ।
२.३.४३ साधुनिपुणाभ्याम् अर्चायां सप्तम्यप्रतेः ।
२.३.४४ प्रसितोत्सुकाभ्यां तृतीया च ।
२.३.४५ नक्षत्रे च लुपि ।
२.३.४६ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ।
२.३.४७ सम्बोधने च ।
२.३.४८ साऽऽमन्त्रितम् ।
२.३.४९ एकवचनं संबुद्धिः ।
२.३.५० षष्ठी शेषे ।
२.३.५१ ज्ञोऽविदर्थस्य करणे ।
२.३.५२ अधीगर्थदयेशां कर्मणि ।
२.३.५३ कृञः प्रतियत्ने ।
२.३.५४ रुजार्थानां भाववचनानामज्वरेः ।
२.३.५५ आशिषि नाथः ।
२.३.५६ जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ।
२.३.५७ व्यवहृपणोः समर्थयोः ।
२.३.५८ दिवस्तदर्थस्य ।
२.३.५९ विभाषोपसर्गे ।
२.३.६० द्वितीया ब्राह्मणे ।
२.३.६१ प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने ।
२.३.६२ चतुर्थ्यर्थे बहुलं छन्दसि ।
२.३.६३ यजेश्च करणे ।
२.३.६४ कृत्वोऽर्थप्रयोगे कालेऽधिकरणे ।
२.३.६५ कर्तृकर्मणोः कृति ।
२.३.६६ उभयप्राप्तौ कर्मणि ।
२.३.६७ क्तस्य च वर्तमाने ।
२.३.६८ अधिकरणवाचिनश्च ।
२.३.६९ न लोकाव्ययनिष्ठाखलर्थतृनाम् ।
२.३.७० अकेनोर्भविष्यदाधमर्ण्ययोः ।
२.३.७१ कृत्यानां कर्तरि वा ।
२.३.७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् ।
२.३.७३ चतुर्थी चाशिष्यायुष्यमद्रभद्र-
कुशलसुखार्थहितैः ।
२.४.१ द्विगुरेकवचनम् ।
२.४.२ द्वंद्वश्च प्राणितूर्यसेनाङ्गानाम् ।
२.४.३ अनुवादे चरणानाम् ।
२.४.४ अध्वर्युक्रतुरनपुंसकम्। ।
२.४.५ अध्ययनतोऽविप्रकृष्टाख्यानाम् ।
२.४.६ जातिरप्राणिनाम् ।
२.४.७ विशिष्टलिङ्गो नदी देशोऽग्रामाः ।
२.४.८ क्षुद्रजन्तवः ।
२.४.९ येषां च विरोधः शाश्वतिकः ।
२.४.१० शूद्राणामनिरवसितानाम् ।
२.४.११ गवाश्वप्रभृतीनि च ।
२.४.१२ विभाषा वृक्षमृगतृणधान्यव्यञ्जन-
पशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ।
२.४.१३ विप्रतिषिद्धं चानधिकरणवाचि ।
२.४.१४ न दधिपयआदीनि ।
२.४.१५ अधिकरणैतावत्त्वे च ।
२.४.१६ विभाषा समीपे ।
२.४.१७ स नपुंसकम् ।
२.४.१८ अव्ययीभावश्च ।
२.४.१९ तत्पुरुषोऽनञ् कर्मधारयः ।
२.४.२० संज्ञायां कन्थोशीनरेषु ।
२.४.२१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ।
२.४.२२ छाया बाहुल्ये ।
२.४.२३ सभा राजाऽमनुष्यपूर्वा ।
२.४.२४ अशाला च ।
२.४.२५ विभाषा सेनासुराछायाशालानिशानाम् ।
२.४.२६ परवल्लिङ्गं द्वंद्वतत्पुरुषयोः ।
२.३.२७ पूर्ववदश्ववडवौ ।
२.४.२८ हेमन्तशिशिरावहोरात्रे च च्छन्दसि ।
२.४.२९ रात्राह्नाहाः पुंसि ।
२.४.३० अपथं नपुंसकम् ।
२.४.३१ अर्धर्चाः पुंसि च ।
२.४.३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयाऽऽदौ ।
२.४.३३ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ ।
२.४.३४ द्वितीयाटौस्स्वेनः ।
२.४.३५ आर्द्धधातुके ।
२.४.३६ अदो जग्धिर्ल्यप्ति किति ।
२.४.३७ लुङ्सनोर्घसॢ ।
२.४.३८ घञपोश्च ।
२.४.३९ बहुलं छन्दसि ।
२.४.४० लिट्यन्यतरस्याम् ।
२.४.४१ वेञो वयिः ।
२.४.४२ हनो वध लिङि ।
२.४.४३ लुङि च ।
२.४.४४ आत्मनेपदेष्वन्यतरस्याम् ।

२.४.४५ इणो गा लुङि ।
२.४.४६ णौ गमिरबोधने ।
२.४.४७ सनि च ।
२.४.४८ इङश्च ।
२.४.४९ गाङ् लिटि ।
२.४.५० विभाषा लुङ्लृङोः ।
२.४.५१ णौ च सँश्चङोः ।
२.४.५२ अस्तेर्भूः ।
२.४.५३ ब्रुवो वचिः ।
२.४.५४ चक्षिङः ख्याञ् ।
२.४.५५ वा लिटि ।
२.४.५६ अजेर्व्यघञपोः ।
२.४.५७ वा यौ ।
२.४.५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः ।
२.४.५९ पैलादिभ्यश्च ।
२.४.६० इञः प्राचाम् ।
२.४.६१ न तौल्वलिभ्यः ।
२.४.६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् ।
२.४.६३ यस्कादिभ्यो गोत्रे ।
२.४.६४ यञञोश्च ।
२.४.६५ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ।
२.४.६६ बह्वचः इञः प्राच्यभरतेषु ।
२.४.६७ न गोपवनादिभ्यः ।
२.४.६८ तिककितवादिभ्यो द्वंद्वे ।
२.४.६९ उपकादिभ्योऽन्यतरस्यामद्वंद्वे ।
२.४.७० आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ।
२.४.७१ सुपो धातुप्रातिपदिकयोः ।
२.४.७२ अदिप्रभृतिभ्यः शपः ।
२.४.७३ बहुलं छन्दसि ।
२.४.७४ यङोऽचि च ।
२.४.७५ जुहोत्यादिभ्यः श्लुः ।
२.४.७६ बहुलं छन्दसि ।
२.४.७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ।
२.४.७८ विभाषा घ्राधेट्शाच्छासः ।
२.४.७९ तनादिभ्यस्तथासोः ।
२.४.८० मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः ।
२.४.८१ आमः ।
२.४.८२ अव्ययादाप्सुपः ।
२.४.८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ।
२.४.८४ तृतीयासप्तम्योर्बहुलम् ।
२.४.८५ लुटः प्रथमस्य डारौरसः ।

---

३.१.१ प्रत्ययः ।
३.१.२ परश्च ।
३.१.३ आद्युदात्तश्च ।
३.१.४ अनुदत्तौ सुप्पितौ ।
३.१.५ गुप्तिज्किद्भ्यः सन् ।
३.१.६ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य ।
३.१.७ धातोः कर्मणः समानकर्तृकादिच्छायां वा ।
३.१.८ सुप आत्मनः क्यच् ।
३.१.९ काम्यच्च ।
३.१.१० उपमानादाचारे ।
३.१.११ कर्तुः क्यङ् सलोपश्च ।
३.१.१२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः ।
३.१.१३ लोहितादिडाज्भ्यः क्यष्।
३.१.१४ कष्टाय क्रमणे ।
३.१.१५ कर्मणः रोमन्थतपोभ्यां वर्तिचरोः ।
३.१.१६ बाष्पोष्माभ्यां उद्वमने ।
३.१.१७ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे ।
३.१.१८ सुखादिभ्यः कर्तृवेदनायाम् ।
३.१.१९ नमोवरिवश्चित्रङः क्यच् ।
३.१.२० पुच्छभाण्डचीवराण्णिङ् ।
३.१.२१ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् ।
३.१.२२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् ।
३.१.२३ नित्यं कौटिल्ये गतौ ।
३.१.२४ लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम् ।
३.१.२५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्ण-चूर्णचुरादिभ्यो णिच् ।
३.१.२६ हेतुमति च ।
३.१.२७ कण्ड्वादिभ्यो यक् ।
३.१.२८ गुपूधूपविच्छिपणिपनिभ्य आयः ।
३.१.२९ ऋतेरीयङ् ।
३.१.३० कमेर्णिङ् ।
३.१.३१ आयादय आर्धद्धातुके वा ।
३.१.३२ सनाद्यन्ता धातवः ।
३.१.३३ स्यतासी लृलुटोः ।
३.१.३४ सिब्बहुलं लेटि ।
३.१.३५ कास्प्रत्ययादाममन्त्रे लिटि ।
३.१.३६ इजादेश्च गुरुमतोऽनृच्छः ।
३.१.३७ दयायासश्च ।
३.१.३८ उषविदजागृभ्योऽन्यतरस्याम् ।
३.१.३९ भीह्रीभृहुवां श्लुवच्च ।
३.१.४० कृञ् चानुप्रयुज्यते लिटि ।
३.१.४१ विदाङ्कुर्वन्त्वित्यन्यतरस्याम् ।
३.१.४२ अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ।

३.१.४३ च्लि लुङि ।
३.१.४४ च्लेः सिच् ।
३.१.४५ शल इगुपधादनिटः क्सः ।
३.१.४६ श्लिष आलिङ्गने ।
३.१.४७ न दृशः ।
३.१.४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ।
३.१.४९ विभाषा धेट्श्व्योः ।
३.१.५० गुपेश्छन्दसि ।
३.१.५१ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ।
३.१.५२ अस्यतिवक्तिख्यातिभ्यः अङ् ।
३.१.५३ लिपिसिचिह्वश्च ।
३.१.५४ आत्मनेपदेष्वन्यतरस्याम् ।
३.१.५५ पुषादिद्युताद्यॢदितः परस्मैपदेषु ।
३.१.५६ सर्त्तिशास्त्यर्तिभ्यश्च ।
३.१.५७ इरितो वा ।
३.१.५८ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च ।
३.१.५९ कृमृदृरुहिभ्यश्छन्दसि ।
३.१.६० चिण् ते पदः ।
३.१.६१ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ।
३.१.६२ अचः कर्मकर्तरि ।
३.१.६३ दुहश्च ।
३.१.६४ न रुधः ।
३.१.६५ तपोऽनुतापे च ।
३.१.६६ चिण् भावकर्मणोः ।
३.१.६७ सार्वधातुके यक् ।
३.१.६८ कर्तरि शप् ।
३.१.६९ दिवादिभ्यः श्यन् ।
३.१.७० वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ।
३.१.७१ यसोऽनुपसर्गात् ।
३.१.७२ संयसश्च ।
३.१.७३ स्वादिभ्यः श्नुः ।
३.१.७४ श्रुवः शृ च ।
३.१.७५ अक्षोऽन्यतरस्याम् ।
३.१.७६ तनूकरणे तक्षः ।
३.१.७७ तुदादिभ्यः शः ।
३.१.७८ रुधादिभ्यः श्नम् ।
३.१.७९ तनादिकृञ्भ्य उः ।
३.१.८० धिन्विकृण्व्योर च ।
३.१.८१ क्र्यादिभ्यः श्ना ।
३.१.८२ स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च ।
३.१.८३ हलः श्नः शानज्झौ ।
३.१.८४ छन्दसि शायजपि ।
३.१.८५ व्यत्ययो बहुलम् ।
३.१.८६ लिङ्याशिष्यङ् ।
३.१.८७ कर्मवत् कर्मणा तुल्यक्रियः ।
३.१.८८ तपस्तपःकर्मकस्यैव ।
३.१.८९ न दुहस्नुनमां यक्चिणौ ।
३.१.९० कुषिरजोः प्राचां श्यन् परस्मैपदं च ।
३.१.९१ धातोः ।
३.१.९२ तत्रोपपदं सप्तमीस्थम् ।
३.१.९३ कृदतिङ् ।
३.१.९४ वाऽसरूपोऽस्त्रियाम् ।
३.१.९५ कृत्याः प्राङ् ण्वुलः ।
३.१.९६ तव्यत्तव्यानीयरः ।
३.१.९७ अचो यत् ।
३.१.९८ पोरदुपधात् ।
३.१.९९ शकिसहोश्च ।
३.१.१०० गदमदचरयमश्चानुपसर्गे ।
३.१.१०१ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ।
३.१.१०२ वह्यं करणम् ।
३.१.१०३ अर्यः स्वामिवैश्ययोः ।
३.१.१०४ उपसर्या काल्या प्रजने ।
३.१.१०५ अजर्यं संगतम् ।
३.१.१०६ वदः सुपि क्यप् च ।
३.१.१०७ भुवो भावे ।
३.१.१०८ हनस्त च ।
३.१.१०९ एतिस्तुशस्वृदृजुषः क्यप् ।
३.१.११० ऋदुपधाच्चाक्लृपिचृतेः ।
३.१.१११ ई च खनः ।
३.१.११२ भृञोऽसंज्ञायाम् ।
३.१.११३ मृजेर्विभाषा ।
३.१.११४ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः ।
३.१.११५ भिद्योद्ध्यौ नदे ।
३.१.११६ पुष्यसिद्ध्यौ नक्षत्रे ।
३.१.११७ विपूयविनीयजित्या मुञ्जकल्कहलिषु ।
३.१.११८ प्रत्यपिभ्यां ग्रहेश्छन्दसि ।
३.१.११९ पदास्वैरिबाह्यापक्ष्येषु च ।
३.१.१२० विभाषा कृवृषोः ।
३.१.१२१ युग्यं च पत्त्रे ।
३.१.१२२ अमावस्यदन्यतरस्याम् ।
३.१.१२३ छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्य मर्यस्तर्याध्वर्यखन्यखान्यदेवयज्याऽऽपृच्छ्य प्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ।
३.१.१२४ ऋहलोर्ण्यत् ।
३.१.१२५ ओरावश्यके ।

३.१.१२६ आसुयुवपिरपिलपित्रपिचमश्च ।
३.१.१२७ आनाय्योऽनित्ये ।
३.१.१२८ प्रणाय्योऽसंमतौ ।
३.१.१२९ पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ।
३.१.१३० क्रतौ कुण्डपाय्यसंचाय्यौ ।
३.१.१३१ अग्नौ परिचाय्योपचाय्यसमूह्याः ।
३.१.१३२ चित्याग्निचित्ये च ।
३.१.१३३ ण्वुल्तृचौ ।
३.१.१३४ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ।
३.१.१३५ इगुपधज्ञाप्रीकिरः कः ।
३.१.१३६ आतश्चोपसर्गे ।
३.१.१३७ पाघ्राध्माधेट्दृशः शः ।
३.१.१३८ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेति-
सातिसाहिभ्यश्च ।
३.१.१३९ ददातिदधात्योर्विभाषा ।
३.१.१४० ज्वलितिकसन्तेभ्यो णः ।
३.१.१४१ श्याऽऽद्व्यधास्रुसंस्रुवतीणवसाऽवहृलिह-
श्लिषश्वसश्च ।
३.१.१४२ दुन्योरनुपसर्गे ।
३.१.१४३ विभाषा ग्रहेः ।
३.१.१४४ गेहे कः ।
३.१.१४५ शिल्पिनि ष्वुन् ।
३.१.१४६ गस्थकन् ।
३.१.१४७ ण्युट् च ।
३.१.१४८ हश्च व्रीहिकालयोः ।
३.१.१४९ प्रुसृल्वः समभिहारे वुन् ।
३.१.१५० आशिषि च ।
३.२.१ कर्मण्यण् ।
३.२.२ ह्वावामश्च ।
३.२.३ आतोऽनुपसर्गे कः ।
३.२.४ सुपि स्थः ।
३.२.५ तुन्दशोकयोः परिमृजापनुदोः ।
३.२.६ प्रे दाज्ञः ।
३.२.७ समि ख्यः ।
३.२.८ गापोष्टक् ।
३.२.९ हरतेरनुद्यमनेऽच् ।
३.२.१० वयसि च ।
३.२.११ आङि ताच्छील्ये ।
३.२.१२ अर्हः ।
३.२.१३ स्तम्बकर्णयोः रमिजपोः ।
३.२.१४ शमि धातोः संज्ञायाम् ।
३.२.१५ अधिकरणे शेतेः ।
३.२.१६ चरेष्टः ।
३.२.१७ भिक्षासेनाऽऽदायेषु च ।
३.२.१८ पुरोऽग्रतोऽग्रेषु सर्तेः ।
३.२.१९ पूर्वे कर्तरि ।
३.२.२० कृञो हेतुताच्छील्यानुलोम्येषु ।
३.२.२१ दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दी-
किम्लिपि
लिबिबलिभक्तिकर्तृचित्रक्षेत्र-
संख्याजङ्घाबाह्वहर्यत्तत्धनुररुष्षु ।
३.२.२२ कर्मणि भृतौ ।
३.२.२३ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ।
३.२.२४ स्तम्बशकृतोरिन् ।
३.२.२५ हरतेर्दृतिनाथयोः पशौ ।
३.२.२६ फलेग्रहिरात्मम्भरिश्च ।
३.२.२७ छन्दसि वनसनरक्षिमथाम् ।
३.२.२८ एजेः खश् ।
३.२.२९ नासिकास्तनयोर्ध्माधेटोः ।
३.२.३० नाडीमुष्ट्योश्च ।
३.२.३१ उदि कूले रुजिवहोः ।
३.२.३२ वहाभ्रे लिहः ।
३.२.३३ परिमाणे पचः ।
३.२.३४ मितनखे च ।
३.२.३५ विध्वरुषोः तुदः ।
३.२.३६ असूर्यललाटयोर्दृशितपोः ।
३.२.३७ उग्रम्पश्येरम्मदपाणिन्धमाश्च ।
३.२.३८ प्रियवशे वदः खच् ।
३.२.३९ द्विषत्परयोस्तापेः ।
३.२.४० वाचि यमो व्रते ।
३.२.४१ पूःसर्वयोर्दारिसहोः ।
३.२.४२ सर्वकूलाभ्रकरीषेषु कषः ।
३.२.४३ मेघर्तिभयेषु कृञः ।
३.२.४४ क्षेमप्रियमद्रेऽण् च ।
३.२.४५ आशिते भुवः करणभावयोः ।
३.२.४६ संज्ञायां भृतॄवृजिधारिसहितपिदमः ।
३.२.४७ गमश्च ।
३.२.४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ।
३.२.४९ आशिषि हनः ।
३.२.५० अपे क्लेशतमसोः ।
३.२.५१ कुमारशीर्षयोर्णिनिः ।
३.२.५२ लक्षणे जायापत्योष्टक् ।
३.२.५३ अमनुष्यकर्तृके च ।
३.२.५४ शक्तौ हस्तिकपाटयोः ।
३.२.५५ पाणिघताडघौ शिल्पिनि ।
३.२.५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु

च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ।
३.२.५७ कर्तरि भुवः खिष्णुच्खुकञौ ।
३.२.५८ स्पृशोऽनुदके क्विन् ।
३.२.५९ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ।
३.२.६० त्यदादिषु दृशोऽनालोचने कञ् च ।
३.२.६१
सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।
३.२.६२ भजो ण्विः ।
३.२.६३ छन्दसि सहः ।
३.२.६४ वहश्च ।
३.२.६५ कव्यपुरीषपुरीष्येषु ञ्युट् ।
३.२.६६ हव्येऽनन्तः पादम् ।
३.२.६७ जनसनखनक्रमगमो विट् ।
३.२.६८ अदोऽनन्ने ।
३.२.६९ क्रव्ये च ।
३.२.७० दुहः कब् घश्च ।
३.२.७१ मन्त्रे श्वेतवहौक्थशस्पुरोडाशो ण्विन् ।
३.२.७२ अवे यजः ।
३.२.७३ विजुपे छन्दसि ।
३.२.७४ आतो मनिन्क्वनिप्वनिपश्च ।
३.२.७५ अन्येभ्योऽपि दृश्यन्ते ।
३.२.७६ क्विप् च ।
३.२.७७ स्थः क च ।
३.२.७८ सुप्यजातौ णिनिस्ताच्छिल्ये ।
३.२.७९ कर्तर्युपमाने ।
३.२.८० व्रते ।
३.२.८१ बहुलमाभीक्ष्ण्ये ।
३.२.८२ मनः ।
३.२.८३ आत्ममाने खश्च ।
३.२.८४ भूते ।
३.२.८५ करणे यजः ।
३.२.८६ कर्मणि हनः ।
३.२.८७ ब्रह्मभ्रूणवृत्रेषु क्विप् ।
३.२.८८ बहुलं छन्दसि ।
३.२.८९ सुकर्मपापमन्त्रपुण्येषु कृञः ।
३.२.९० सोमे सुञः ।
३.२.९१ अग्नौ चेः ।
३.२.९२ कर्मण्यग्न्याख्यायाम् ।
३.२.९३ कर्मणीनिर्विक्रियः ।
३.२.९४ दृशेः क्वनिप् ।
३.२.९५ राजनि युधिकृञः ।
३.२.९६ सहे च ।
३.२.९७ सप्तम्यां जनेर्डः ।
३.२.९८ पञ्चम्यामजातौ ।
३.२.९९ उपसर्गे च संज्ञायाम् ।
३.२.१०० अनौ कर्मणि ।
३.२.१०१ अन्येष्वपि दृश्यते ।
३.२.१०२ निष्ठा ।
३.२.१०३ सुयजोर्ङ्वनिप् ।
३.२.१०४ जीर्यतेरतृन् ।
३.२.१०५ छन्दसि लिट् ।
३.२.१०६ लिटः कानज्वा ।
३.२.१०७ क्वसुश्च ।
३.२.१०८ भाषायां सदवसश्रुवः ।
३.२.१०९ उपेयिवाननाश्वाननूचानश्च ।
३.२.११० लुङ् ।
३.२.१११ अनद्यतने लङ् ।
३.२.११२ अभिज्ञावचने लृट् ।
३.२.११३ न यदि ।
३.२.११४ विभाषा साकाङ्क्षे ।
३.२.११५ परोक्षे लिट् ।
३.२.११६ हशश्वतोर्लङ् च ।
३.२.११७ प्रश्ने चासन्नकाले ।
३.२.११८ लट् स्मे ।
३.२.११९ अपरोक्षे च ।
३.२.१२० ननौ पृष्टप्रतिवचने ।
३.२.१२१ नन्वोर्विभाषा ।
३.२.१२२ पुरि लुङ् चास्मे ।
३.२.१२३ वर्तमाने लट् ।
३.२.१२४ लटः शतृशनचावप्रथमासमानाधिकरणे ।
३.२.१२५ सम्बोधने च ।
३.२.१२६ लक्षणहेत्वोः क्रियायाः ।
३.२.१२७ तौ सत् ।
३.२.१२८ पूङ्यजोः शानन् ।
३.२.१२९ ताच्छील्यवयोवचनशक्तिषु चानश् ।
३.२.१३० इङ्धार्योः शत्रकृच्छ्रिणि ।
३.२.१३१ द्विषोऽमित्रे ।
३.२.१३२ सुञो यज्ञसंयोगे ।
३.२.१३३ अर्हः पूजायाम् ।
३.२.१३४ आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ।
३.२.१३५ तृन् ।
३.२.१३६ अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मद-रुच्यपत्रपवृतुवृधुसहचर इष्णुच् ।
३.२.१३७ णेश्छन्दसि ।
३.२.१३८ भुवश्च ।

३.२.१३९ ग्लाजिस्थश्च क्स्नुः ।
३.२.१४० त्रसिगृधिधृषिक्षिपेः क्नुः ।
३.२.१४१ शमित्यष्टाभ्यो घिनुण् ।
३.२.१४२ संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृज-
परिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुह-
दुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरज-
भजातिचरापचरामुषाभ्याहनश्च ।
३.२.१४३ वौ कषलसकत्थस्रम्भः ।
३.२.१४४ अपे च लषः ।
३.२.१४५ प्रे लपसृद्रुमथवदवसः ।
३.२.१४६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादि-
व्याभाषासूयो वुञ् ।
३.२.१४७ देविक्रुशोश्चोपसर्गे ।
३.२.१४८ चलनशब्दार्थादकर्मकाद्युच् ।
३.२.१४९ अनुदात्तेतश्च हलादेः ।
३.२.१५० जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः
।
३.२.१५१ क्रुधमण्डार्थेभ्यश्च ।
३.२.१५२ न यः ।
३.२.१५३ सूददीपदीक्षश्च ।
३.२.१५४ लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ।
३.२.१५५ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ।
३.२.१५६ प्रजोरिनिः ।
३.२.१५७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ।
३.२.१५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ।
३.२.१५९ दाधेट्सिशदसदो रुः ।
३.२.१६० सृघस्यदः क्मरच् ।
३.२.१६१ भञ्जभासमिदो घुरच् ।
३.२.१६२ विदिभिदिच्छिदेः कुरच् ।
३.२.१६३ इण्नश्जिसर्त्तिभ्यः क्वरप् ।
३.२.१६४ गत्वरश्च ।
३.२.१६५ जागुरूकः ।
३.२.१६६ यजजपदशां यङः ।
३.२.१६७ नमिकम्पिस्म्यजसकमहिंसदीपो रः ।
३.२.१६८ सनाशंसभिक्ष उः ।
३.२.१६९ विन्दुरिच्छुः ।
३.२.१७० क्याच्छन्दसि ।
३.२.१७१ आदृगमहनजनः किकिनौ लिट् च ।
३.२.१७२ स्वपितृषोर्नजिङ् ।
३.२.१७३ शॄवन्द्योरारुः ।
३.२.१७४ भियः क्रुक्लुकनौ ।
३.२.१७५ स्थेशभासपिसकसो वरच् ।
३.२.१७६ यश्च यङः ।
३.२.१७७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ।
३.२.१७८ अन्येभ्योऽपि दृश्यते ।
३.२.१७९ भुवः संज्ञाऽन्तरयोः ।
३.२.१८० विप्रसम्भ्यो ड्वसंज्ञायाम् ।
३.२.१८१ धः कर्मणि ष्ट्रन् ।
३.२.१८२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ।
३.२.१८३ हलसूकरयोः पुवः ।
३.२.१८४ अर्तिलूधूसूखनसहचर इत्रः ।
३.२.१८५ पुवः संज्ञायाम् ।
३.२.१८६ कर्तरि चर्षिदेवतयोः ।
३.२.१८७ ञीतः क्तः ।
३.२.१८८ मतिबुद्धिपूजार्थेभ्यश्च ।
३.३.१ उणादयो बहुलम् ।
३.३.२ भूतेऽपि दृश्यन्ते ।
३.३.३ भविष्यति गम्यादयः ।
३.३.४ यावत्पुरानिपातयोर्लट् ।
३.३.५ विभाषा कदाकर्ह्योः ।
३.३.६ किंवृत्ते लिप्सायाम् ।
३.३.७ लिप्स्यमानसिद्धौ च ।
३.३.८ लोडर्थलक्षणे च ।
३.३.९ लिङ् चोर्ध्वमौहूर्तिके ।
३.३.१० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ।
३.३.११ भाववचनाश्च ।
३.३.१२ अण् कर्मणि च ।
३.३.१३ लृट् शेषे च ।
३.३.१४ लृटः सद् वा ।
३.३.१५ अनद्यतने लुट् ।
३.३.१६ पदरुजविशस्पृशो घञ् ।
३.३.१७ सृ स्थिरे ।
३.३.१८ भावे ।
३.३.१९ अकर्तरि च कारके संज्ञायाम् ।
३.३.२० परिमणाख्यायां सर्वेभ्यः ।
३.३.२१ इङश्च ।
३.३.२२ उपसर्गे रुवः ।
३.३.२३ समि युद्रुदुवः ।
३.३.२४ श्रिणीभुवोऽनुपसर्गे ।
३.३.२५ वौ क्षुश्रुवः ।
३.३.२६ अवोदोर्नियः ।
३.३.२७ प्रे द्रुस्तुस्रुवः ।
३.३.२८ निरभ्योः पूल्वोः ।
३.३.२९ उन्न्योर्ग्रः ।
३.३.३० कॄ धान्ये ।
३.३.३१ यज्ञे समि स्तुवः ।

३.३.३२ प्रे स्त्रोऽयज्ञे ।
३.३.३३ प्रथने वावशब्दे ।
३.३.३४ छन्दोनाम्नि च ।
३.३.३५ उदि ग्रहः ।
३.३.३६ समि मुष्टौ ।
३.३.३७ परिन्योर्नीणोर्द्यूताभ्रेषयोः ।
३.३.३८ परावनुपात्यय इणः ।
३.३.३९ व्युपयोः शेतेः पर्याये ।
३.३.४० हस्तादाने चेरस्तेये ।
३.३.४१ निवासचितिशरीरोपसमाधानेष्वादेश्च कः ।
३.३.४२ संघे चानौत्तराधर्ये ।
३.३.४३ कर्मव्यतिहारे णच् स्त्रियाम् ।
३.३.४४ अभिविधौ भाव इनुण् ।
३.३.४५ आक्रोशेऽवन्योर्ग्रहः ।
३.३.४६ प्रे लिप्सायाम् ।
३.३.४७ परौ यज्ञे ।
३.३.४८ नौ वृ धान्ये ।
३.३.४९ उदि श्रयतियौतिपूद्रुवः ।
३.३.५० विभाषाऽऽङि रुप्लुवोः ।
३.३.५१ अवे ग्रहो वर्षप्रतिबन्धे ।
३.३.५२ प्रे वणिजाम् ।
३.३.५३ रश्मौ च ।
३.३.५४ वृणोतेराच्छादने ।
३.३.५५ परौ भुवोऽवज्ञाने ।
३.३.५६ एरच् ।
३.३.५७ ऋदोरप् ।
३.३.५८ ग्रहवृदृनिश्चिगमश्च ।
३.३.५९ उपसर्गेऽदः ।
३.३.६० नौ ण च ।
३.३.६१ व्यधजपोरनुपसर्गे ।
३.३.६२ स्वनहसोर्वा ।
३.३.६३ यमः समुपनिविषु ।
३.३.६४ नौ गदनदपठस्वनः ।
३.३.६५ क्वणो वीणायां च ।
३.३.६६ नित्यं पणः परिमाणे ।
३.३.६७ मदोऽनुपसर्गे ।
३.३.६८ प्रमदसम्मदौ हर्षे ।
३.३.६९ समुदोरजः पशुषु ।
३.३.७० अक्षेषु ग्लहः ।
३.३.७१ प्रजने सर्तेः ।
३.३.७२ ह्वः सम्प्रसारणं च न्यभ्युपविषु ।
३.३.७३ आङि युद्धे ।
३.३.७४ निपानमाहावः ।
३.३.७५ भावेऽनुपसर्गस्य ।
३.३.७६ हनश्च वधः ।
३.३.७७ मूर्तौ घनः ।
३.३.७८ अन्तर्घनो देशे ।
३.३.७९ अगारैकदेशे प्रघणः प्रघाणश्च ।
३.३.८० उद्घनोऽत्याधानम् ।
३.३.८१ अपघनोऽङ्गम् ।
३.३.८२ करणेऽयोविद्रुषु ।
३.३.८३ स्तम्बे क च ।
३.३.८४ परौ घः ।
३.३.८५ उपघ्न आश्रये ।
३.३.८६ संघोद्घौ गणप्रशंसयोः ।
३.३.८७ निघो निमितम् ।
३.३.८८ ड्वितः क्त्रिः ।
३.३.८९ ट्वितोऽथुच् ।
३.३.९० यजयाचयतविच्छप्रच्छरक्षो नङ् ।
३.३.९१ स्वपो नन् ।
३.३.९२ उपसर्गे घोः किः ।
३.३.९३ कर्मण्यधिकरणे च ।
३.३.९४ स्त्रियां क्तिन् ।
३.३.९५ स्थागापापचां भावे ।
३.३.९६ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ।
३.३.९७ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ।
३.३.९८ व्रजयजोर्भावे क्यप् ।
३.३.९९ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः
।
३.३.१०० कृञः श च ।
३.३.१०१ इच्छा ।
३.३.१०२ अ प्रत्ययात् ।
३.३.१०३ गुरोश्च हलः ।
३.३.१०४ षिद्भिदादिभ्योऽङ् ।
३.३.१०५ चिन्तिपूजिकथिकुम्बिचर्चश्च ।
३.३.१०६ आतश्चोपसर्गे ।
३.३.१०७ ण्यासश्रन्थो युच् ।
३.३.१०८ रोगाख्यायां ण्वुल् बहुलम् ।
३.३.१०९ संज्ञायाम् ।
३.३.११० विभाषाऽऽख्यानपरिप्रश्नयोरिञ् च ।
३.३.१११ पर्यायार्हर्णोत्पत्तिषु ण्वुच् ।
३.३.११२ आक्रोशे नञ्यनिः ।
३.३.११३ कृत्यल्युटो बहुलम् ।
३.३.११४ नपुंसके भावे क्तः ।
३.३.११५ ल्युट् च ।
३.३.११६ कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम् ।

३.३.११७ करणाधिकरणयोश्च ।
३.३.११८ पुंसि संज्ञायां घः प्रायेण ।
३.३.११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ।
३.३.१२० अवे तॄस्त्रोर्घञ् ।
३.३.१२१ हलश्च ।
३.३.१२२ अध्यायन्यायोद्यावसंहाराधारावयाश्च ।
३.३.१२३ उदङ्कोऽनुदके ।
३.३.१२४ जालमानायः ।
३.३.१२५ खनो घ च ।
३.३.१२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।
३.३.१२७ कर्तृकर्मणोश्च भूकृञोः ।
३.३.१२८ आतो युच् ।
३.३.१२९ छन्दसि गत्यर्थेभ्यः ।
३.३.१३० अन्येभ्योऽपि दृश्यते ।
३.३.१३१ वर्तमानसामीप्ये वर्तमानवद्वा ।
३.३.१३२ आशंसायां भूतवच्च ।
३.३.१३३ क्षिप्रवचने लृट् ।
३.३.१३४ आशंसावचने लिङ् ।
३.३.१३५ नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ।
३.३.१३६ भविष्यति मर्यादावचनेऽवरस्मिन् ।
३.३.१३७ कालविभागे चानहोरात्राणाम् ।
३.३.१३८ परस्मिन् विभाषा ।
३.३.१३९ लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ ।
३.३.१४० भूते च ।
३.३.१४१ वोताप्योः ।
३.३.१४२ गर्हायां लडपिजात्वोः ।
३.३.१४३ विभाषा कथमि लिङ् च ।
३.३.१४४ किंवृत्ते लिङ्लृटौ ।
३.३.१४५ अनवक्लृप्त्यमर्षयोरकिंवृत्ते अपि ।
३.३.१४६ किंकिलास्त्यर्थेषु लृट् ।
३.३.१४७ जातुयदोर्लिङ् ।
३.३.१४८ यच्चयत्रयोः ।
३.३.१४९ गर्हायां च ।
३.३.१५० चित्रीकरणे च ।
३.३.१५१ शेषे लृडयदौ ।
३.३.१५२ उताप्योः समर्थयोर्लिङ् ।
३.३.१५३ कामप्रवेदनेऽकच्चिति ।
३.३.१५४ सम्भवानेऽलमिति चेत् सिद्धाप्रयोगे ।
३.३.१५५ विभाषा धातौ सम्भावनवचनेऽयदि ।
३.३.१५६ हेतुहेतुमतोर्लिङ् ।
३.३.१५७ इच्छार्थेषु लिङ्लोटौ ।
३.३.१५८ समानकर्तृकेषु तुमुन् ।
३.३.१५९ लिङ् च ।
३.३.१६० इच्छार्थेभ्यो विभाषा वर्तमाने ।
३.३.१६१ विधिनिमन्त्रणामन्त्रण अधीष्टसम्प्रश्नप्रार्थनेषु
लिङ् ।
३.३.१६२ लोट् च ।
३.३.१६३ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ।
३.३.१६४ लिङ् चोर्ध्वमौहूर्तिके ।
३.३.१६५ स्मे लोट् ।
३.३.१६६ अधीष्टे च ।
३.३.१६७ कालसमयवेलासु तुमुन् ।
३.३.१६८ लिङ् यदि ।
३.३.१६९ अर्हे कृत्यतृचश्च ।
३.३.१७० आवश्यकाधमर्ण्ययोर्णिनिः ।
३.३.१७१ कृत्याश्च ।
३.३.१७२ शकि लिङ् च ।
३.३.१७३ आशिषि लिङ्लोटौ ।
३.३.१७४ क्तिच्क्तौ च संज्ञायाम् ।
३.३.१७५ माङि लुङ् ।
३.३.१७६ स्मोत्तरे लङ् च ।
३.४.१ धातुसम्बन्धे प्रत्ययाः ।
३.४.२ क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः ।
३.४.३ समुच्चयेऽन्यतरस्याम् ।
३.४.४ यथाविध्यनुप्रयोगः पूर्वस्मिन् ।
३.४.५ समुच्चये सामान्यवचनस्य ।
३.४.६ छन्दसि लुङ्लङ्लिटः ।
३.४.७ लिङर्थे लेट् ।
३.४.८ उपसंवादाशङ्कयोश्च ।
३.४.९ तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्-
शध्यैशध्यैन्तवैतवेङ्तवेनः ।
३.४.१० प्रयै रोहिष्यै अव्यथिष्यै ।
३.४.११ दृशे विख्ये च ।
३.४.१२ शकि णमुल्कमुलौ ।
३.४.१३ ईश्वरे तोसुन्कसुनौ ।
३.४.१४ कृत्यार्थे तवैकेन्केन्यत्वनः ।
३.४.१५ अवचक्षे च ।
३.४.१६ भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ।
३.४.१७ सृपितृदोः कसुन् ।
३.४.१८ अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा ।
३.४.१९ उदीचां माङो व्यतीहारे ।
३.४.२० परावरयोगे च ।
३.४.२१ समानकर्तृकयोः पूर्वकाले ।
३.४.२२ आभीक्ष्ण्ये णमुल् च ।
३.४.२३ न यद्यनाकाङ्क्षे ।
३.४.२४ विभाषाऽग्रेप्रथमपूर्वेषु ।

३.४.२५ कर्मण्याक्रोशे कृञः खमुञ् ।
३.४.२६ स्वादुमि णमुल् ।
३.४.२७ अन्यथैव ङ्कथमित्थंसु सिद्धाप्रयोगश्चेत् ।
३.४.२८ यथातथयोरसूयाप्रतिवचने ।
३.४.२९ कर्मणि दृशिविदोः साकल्ये ।
३.४.३० यावति विन्दजीवोः ।
३.४.३१ चर्मोदरयोः पूरेः ।
३.४.३२ वर्षप्रमाण ऊलोपश्चास्यान्यतरास्यम् ।
३.४.३३ चेले क्नोपेः ।
३.४.३४ निमूलसमूलयोः कषः ।
३.४.३५ शुष्कचूर्णरूक्षेषु पिषः ।
३.४.३६ समूलाकृतजीवेषु हन्कृञ्ग्रहः ।
३.४.३७ करणे हनः ।
३.४.३८ स्नेहने पिषः ।
३.४.३९ हस्ते वर्त्तिग्रहोः ।
३.४.४० स्वे पुषः ।
३.४.४१ अधिकरणे बन्धः ।
३.४.४२ संज्ञायाम् ।
३.४.४३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः ।
३.४.४४ ऊर्ध्वे शुषिपूरोः ।
३.४.४५ उपमाने कर्मणि च ।
३.४.४६ कषादिषु यथाविध्यनुप्रयोगः ।
३.४.४७ उपदंशस्तृतीयायाम् ।
३.४.४८ हिंसार्थानां च समानकर्मकाणाम् ।
३.४.४९ सप्तम्यां चोपपीडरुधकर्षः ।
३.४.५० समासत्तौ ।
३.४.५१ प्रमाणे च ।
३.४.५२ अपादाने परीप्सायाम् ।
३.४.५३ द्वितीयायां च ।
३.४.५४ स्वाङ्गेऽध्रुवे ।
३.४.५५ परिक्लिश्यमाने च ।
३.४.५६ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ।
३.४.५७ अस्यतितृषोः क्रियाऽन्तरे कालेषु ।
३.४.५८ नाम्न्यादिशिग्रहोः ।
३.४.५९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ।
३.४.६० तिर्यच्यपवर्गे ।
३.४.६१ स्वाङ्गे तस्प्रत्यये कृभ्वोः ।
३.४.६२ नाधाऽर्थप्रत्यये च्व्यर्थे ।
३.४.६३ तूष्णीमि भुवः ।
३.४.६४ अन्वच्यानुलोम्ये ।
३.४.६५
शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ।
३.४.६६ पर्याप्तिवचनेष्वलमर्थेषु ।
३.४.६७ कर्तरि कृत् ।
३.४.६८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ।
३.४.६९ लः कर्मणि च भावे चाकर्मकेभ्यः। ।
३.४.७० तयोरेव कृत्यक्तखलर्थाः ।
३.४.७१ अदिकर्मणि क्तः कर्तरि च ।
३.४.७२
गत्यर्थाकर्मकश्लिषशीङ्स्थाऽऽसवसजनरुहजीर्यतिभ्यश्च
।
३.४.७३ दाशगोघ्नौ सम्प्रदाने ।
३.४.७४ भीमादयोऽपादाने ।
३.४.७५ ताभ्यामन्यत्रोणादयः ।
३.४.७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ।
३.४.७७ लस्य ।
३.४.७८ तिप्तस्झिसिप्थस्थमिब्वस्मस्-
तातांझथासाथांध्वमिड्वहिमहिङ् ।
३.४.७९ टित आत्मनेपदानां टेरे ।
३.४.८० थासस्से ।
३.४.८१ लिटस्तझयोरेशिरेच् ।
३.४.८२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः ।
३.४.८३ विदो लटो वा ।
३.४.८४ ब्रुवः पञ्चानामादित आहो ब्रुवः ।
३.४.८५ लोटो लङ्वत् ।
३.४.८६ एरुः ।
३.४.८७ सेर्ह्यपिच्च ।
३.४.८८ वा छन्दसि ।
३.४.८९ मेर्निः ।
३.४.९० आमेतः ।
३.४.९१ सवाभ्यां वामौ ।
३.४.९२ आडुत्तमस्य पिच्च ।
३.४.९३ एत ऐ ।
३.४.९४ लेटोऽडाटौ ।
३.४.९५ आत ऐ ।
३.४.९६ वैतोऽन्यत्र ।
३.४.९७ इतश्च लोपः परस्मैपदेषु ।
३.४.९८ स उत्तमस्य ।
३.४.९९ नित्यं ङितः ।
३.४.१०० इतश्च ।
३.४.१०१ तस्थस्थमिपां तांतंतामः ।
३.४.१०२ लिङस्सीयुट् ।
३.४.१०३ यासुट् परस्मैपदेषूदात्तो ङिच्च ।
३.४.१०४ किदाशिषि ।
३.४.१०५ झस्य रन् ।
३.४.१०६ इटोऽत् ।

३.४.१०७ सुट् तिथोः ।
३.४.१०८ झेर्जुस् ।
३.४.१०९ सिजभ्यस्तविदिभ्यः च ।
३.४.११० आतः ।
३.४.१११ लङः शाकटायनस्यैव ।
३.४.११२ द्विषश्च ।
३.४.११३ तिङ्शित्सार्वधातुकम् ।
३.४.११४ आर्द्धधातुकं शेषः ।
३.४.११५ लिट् च ।
३.४.११६ लिङाशिषि ।
३.४.११७ छन्दस्युभयथा ।

---

४.१.१ ङ्याप्प्रातिपदिकात् ।
४.१.२ स्वौजसमौट्छस्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्-ङसोसाम्ङ्योस्सुप् ।
४.१.३ स्त्रियाम् ।
४.१.४ अजाद्यतष्टाप् ।
४.१.५ ऋन्नेभ्यो ङीप् ।
४.१.६ उगितश्च ।
४.१.७ वनो र च ।
४.१.८ पादोऽन्यतरस्याम् ।
४.१.९ टाबृचि ।
४.१.१० न षट्स्वस्रादिभ्यः ।
४.१.११ मनः ।
४.१.१२ अनो बहुव्रीहेः ।
४.१.१३ डाबुभाभ्यामन्यतरस्याम् ।
४.१.१४ अनुपसर्जनात् ।
४.१.१५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः
।
४.१.१६ यञश्च ।
४.१.१७ प्राचां ष्फ तद्धितः ।
४.१.१८ सर्वत्र लोहितादिकतान्तेभ्यः ।
४.१.१९ कौरव्यमाण्डूकाभ्यां च ।
४.१.२० वयसि प्रथमे ।
४.१.२१ द्विगोः ।
४.१.२२ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।
४.१.२३ काण्डान्तात् क्षेत्रे ।
४.१.२४ पुरुषात् प्रमाणेऽन्यतरस्याम् ।
४.१.२५ बहुव्रीहेरूधसो ङीष्।
४.१.२६ संख्याऽव्ययादेर्ङीप् ।
४.१.२७ दामहायनान्ताच्च ।
४.१.२८ अन उपधालोपिनोन्यतरस्याम् ।
४.१.२९ नित्यं संज्ञाछन्दसोः ।
४.१.३० केवलमामकभागधेयपापापरसमानार्यकृत-
सुमङ्गलभेषजाच्च ।
४.१.३१ रात्रेश्चाजसौ ।
४.१.३२ अन्तर्वत्पतिवतोर्नुक् ।
४.१.३३ पत्युर्नो यज्ञसंयोगे ।
४.१.३४ विभाषा सपूर्वस्य ।
४.१.३५ नित्यं सपत्न्यादिषु ।
४.१.३६ पूतक्रतोरै च ।
४.१.३७ वृषाकप्यग्निकुसितकुसीदानामुदात्तः ।
४.१.३८ मनोरौ वा ।
४.१.३९ वर्णादनुदात्तात्तोपधात्तो नः ।
४.१.४० अन्यतो ङीष्।
४.१.४१ षिद्गौरादिभ्यश्च ।
४.१.४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुक-कबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्य-वर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ।
४.१.४३ शोणात् प्राचाम् ।
४.१.४४ वोतो गुणवचनात् ।
४.१.४५ बह्वादिभ्यश्च ।
४.१.४६ नित्यं छन्दसि ।
४.१.४७ भुवश्च ।
४.१.४८ पुंयोगादाख्यायाम् ।
४.१.४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवन-मातुलाचार्याणामानुक् ।
४.१.५० क्रीतात् करणपूर्वात् ।
४.१.५१ क्तादल्पाख्यायाम् ।
४.१.५२ बहुव्रीहेश्चान्तोदात्तात् ।
४.१.५३ अस्वाङ्गपूर्वपदाद्वा ।
४.१.५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ।
४.१.५५ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ।
४.१.५६ न क्रोडादिबह्वचः ।
४.१.५७ सहनञ्विद्यमानपूर्वाच्च ।
४.१.५८ नखमुखात् संज्ञायाम् ।
४.१.५९ दीर्घजिह्वी च च्छन्दसि ।
४.१.६० दिक्पूर्वपदान्ङीप् ।
४.१.६१ वाहः ।
४.१.६२ सख्यशिश्वीति भाषायाम् ।
४.१.६३ जातेरस्त्रीविषयादयोपधात् ।
४.१.६४ पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च ।
४.१.६५ इतो मनुष्यजातेः ।
४.१.६६ ऊङुतः ।
४.१.६७ बाह्वन्तात् संज्ञायाम् ।
४.१.६८ पङ्गोश्च ।
४.१.६९ ऊरूत्तरपदादौपम्ये ।

४.१.७० संहितशफलक्षणवामादेश्च ।
४.१.७१ कद्रुकमण्डल्वोश्छन्दसि ।
४.१.७२ संज्ञायाम् ।
४.१.७३ शार्ङ्गरवाद्यञो ङीन् ।
४.१.७४ यङश्चाप् ।
४.१.७५ आवट्याच्च ।
४.१.७६ तद्धिताः ।
४.१.७७ यूनस्तिः ।
४.१.७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।
४.१.७९ गोत्रावयवात् ।
४.१.८० क्रौड्यादिभ्यश्च ।
४.१.८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रि-
काण्ठेविद्धिभ्योऽन्यतरस्याम् ।
४.१.८२ समर्थानां प्रथमाद्वा ।
४.१.८३ प्राग्दीव्यतोऽण् ।
४.१.८४ अश्वपत्यादिभ्यश्च ।
४.१.८५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।
४.१.८६ उत्सादिभ्योऽञ् ।
४.१.८७ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।
४.१.८८ द्विगोर्लुगनपत्ये ।
४.१.८९ गोत्रेऽलुगचि ।
४.१.९० यूनि लुक् ।
४.१.९१ फक्फिञोरन्यतरस्याम् ।
४.१.९२ तस्यापत्यम् ।
४.१.९३ एको गोत्रे ।
४.१.९४ गोत्राद्यून्यस्त्रियाम् ।
४.१.९५ अत इञ् ।
४.१.९६ बाह्वादिभ्यश्च ।
४.१.९७ सुधातुरकङ् च ।
४.१.९८ गोत्रे कुञ्जादिभ्यश्च्फञ् ।
४.१.९९ नडादिभ्यः फक् ।
४.१.१०० हरितादिभ्योऽञः ।
४.१.१०१ यञिञोश्च ।
४.१.१०२ शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ।
४.१.१०३ द्रोणपर्वतजीवन्तादन्यतरयाम् ।
४.१.१०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।
४.१.१०५ गर्गादिभ्यो यञ् ।
४.१.१०६ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ।
४.१.१०७ कपिबोधादाङ्गिरसे ।
४.१.१०८ वतण्डाच्च ।
४.१.१०९ लुक् स्त्रियाम् ।
४.१.११० अश्वादिभ्यः फञ् ।
४.१.१११ भर्गात् त्रैगर्ते ।
४.१.११२ शिवादिभ्योऽण् ।
४.१.११३ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।
४.१.११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च ।
४.१.११५ मातुरुत् संख्यासम्भद्रपूर्वायाः ।
४.१.११६ कन्यायाः कनीन च ।
४.१.११७ विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।
४.१.११८ पीलाया वा ।
४.१.११९ ढक् च मण्डूकात् ।
४.१.१२० स्त्रीभ्यो ढक् ।
४.१.१२१ द्व्यचः ।
४.१.१२२ इतश्चानिञः ।
४.१.१२३ शुभ्रादिभ्यश्च ।
४.१.१२४ विकर्णकुषीतकात् काश्यपे ।
४.१.१२५ भ्रुवो वुक् च ।
४.१.१२६ कल्याण्यादीनामिनङ् ।
४.१.१२७ कुलटाया वा ।
४.१.१२८ चटकाया ऐरक् ।
४.१.१२९ गोधाया ढ्रक् ।
४.१.१३० आरगुदीचाम् ।
४.१.१३१ क्षुद्राभ्यो वा ।
४.१.१३२ पितृष्वसुश्छण् ।
४.१.१३३ ढकि लोपः ।
४.१.१३४ मातृष्वसुश्च ।
४.१.१३५ चतुष्पाद्भ्यो ढञ् ।
४.१.१३६ गृष्ट्यादिभ्यश्च ।
४.१.१३७ राजश्वशुराद्यत् ।
४.१.१३८ क्षत्राद्घः ।
४.१.१३९ कुलात् खः ।
४.१.१४० अपूर्वपदादन्यतरस्यां यड्ढकञौ ।
४.१.१४१ महाकुलादञ्खञौ ।
४.१.१४२ दुष्कुलाड्ढक् ।
४.१.१४३ स्वसुश्छः ।
४.१.१४४ भ्रातुर्व्यच्च ।
४.१.१४५ व्यन् सपत्ने ।
४.१.१४६ रेवत्यादिभ्यष्ठक् ।
४.१.१४७ गोत्रस्त्रियाः कुत्सने ण च ।
४.१.१४८ वृद्धाट्ठक् सौवीरेषु बहुलम् ।
४.१.१४९ फेश्छ च ।
४.१.१५० फाण्टाहृतिमिमताभ्यां णफिञौ ।
४.१.१५१ कुर्वादिभ्यो ण्यः ।
४.१.१५२ सेनान्तलक्षणकारिभ्यश्च ।
४.१.१५३ उदीचामिञ् ।
४.१.१५४ तिकादिभ्यः फिञ् ।

४.१.१५५ कौसल्यकार्मार्याभ्यां च ।
४.१.१५६ अणो द्व्यचः ।
४.१.१५७ उदीचां वृद्धादगोत्रात् ।
४.१.१५८ वाकिनादीनां कुक् च ।
४.१.१५९ पुत्रान्तादन्यतरस्याम् ।
४.१.१६० प्राचामवृद्धात् फिन् बहुलम् ।
४.१.१६१ मनोर्जातावञ्यतौ षुक् च ।
४.१.१६२ अपत्यं पौत्रप्रभृति गोत्रम् ।
४.१.१६३ जीवति तु वंश्ये युवा ।
४.१.१६४ भ्रातरि च ज्यायसि ।
४.१.१६५ वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति ।
४.१.१६६ वृद्धस्य च पूजायाम् ।
४.१.१६७ यूनश्च कुत्सायाम् ।
४.१.१६८ जनपदशब्दात् क्षत्रियादञ् ।
४.१.१६९ साल्वेयगान्धारिभ्यां च ।
४.१.१७० द्व्यञ्मगधकलिङ्गसूरमसादण् ।
४.१.१७१ वृद्धेत्कोसलाजादाञ्ञ्यङ् ।
४.१.१७२ कुरुणादिभ्यो ण्यः ।
४.१.१७३ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।
४.१.१७४ ते तद्राजाः ।
४.१.१७५ कम्बोजाल्लुक् ।
४.१.१७६ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।
४.१.१७७ अतश्च ।
४.१.१७८ न प्राच्यभर्गादियौधेयादिभ्यः ।
४.२.१ तेन रक्तं रागात् ।
४.२.२ लाक्षारोचना( शकलकर्दमा) ट्ठक् ।
४.२.३ नक्षत्रेण युक्तः कालः ।
४.२.४ लुबविशेषे ।
४.२.५ संज्ञायां श्रवणाश्वत्थाभ्याम् ।
४.२.६ द्वंद्वाच्छः ।
४.२.७ दृष्टं साम ।
४.२.८ कलेर्ढक् ।
४.२.९ वामदेवाड्ड्यड्ड्यौ ।
४.२.१० परिवृतो रथः ।
४.२.११ पाण्डुकम्बलादिनिः ।
४.२.१२ द्वैपवैयाघ्रादञ् ।
४.२.१३ कौमारापूर्ववचने ।
४.२.१४ तत्रोद्धृतममत्रेभ्यः ।
४.२.१५ स्थण्डिलाच्छयितरि व्रते ।
४.२.१६ संस्कृतं भक्षाः ।
४.२.१७ शूलोखाद्यत् ।
४.२.१८ दध्नष्ठक् ।
४.२.१९ उदश्वितोऽन्यतरस्याम् ।
४.२.२० क्षीराड्ढञ् ।
४.२.२१ साऽस्मिन् पौर्णमासीति ( संज्ञायाम्) ।
४.२.२२ आग्रहायण्यश्वत्थाट्ठक् ।
४.२.२३ विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः ।
४.२.२४ साऽस्य देवता ।
४.२.२५ कस्येत् ।
४.२.२६ शुक्राद्घन् ।
४.२.२७ अपोनप्त्रपान्नप्तृभ्यां घः ।
४.२.२८ छ च ।
४.२.२९ महेन्द्राद्घाणौ च ।
४.२.३० सोमाट्ट्यण् ।
४.२.३१ वाय्वृतुपित्रुषसो यत् ।
४.२.३२ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पति-
गृहमेधाच्छ च ।
४.२.३३ अग्नेर्ढक् ।
४.२.३४ कालेभ्यो भववत् ।
४.२.३५ महाराजप्रोष्ठपदाट्ठञ् ।
४.२.३६ पितृव्यमातुलमातामहपितामहाः ।
४.२.३७ तस्य समूहः ।
४.२.३८ भिक्षाऽऽदिभ्योऽण् ।
४.२.३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्स-
मनुष्याजाद्वुञ् ।
४.२.४० केदाराद्यञ् च ।
४.२.४१ ठञ् कवचिनश्च ।
४.२.४२ ब्राह्मणमाणववाडवाद्यन् ।
४.२.४३ ग्रामजनबन्धुसहायेभ्यः तल् ।
४.२.४४ अनुदात्तादेरञ् ।
४.२.४५ खण्डिकादिभ्यश्च ।
४.२.४६ चरणेभ्यो धर्मवत् ।
४.२.४७ अचित्तहस्तिधेनोष्ठक् ।
४.२.४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।
४.२.४९ पाशादिभ्यो यः ।
४.२.५० खलगोरथात् ।
४.२.५१ इनित्रकट्यचश्च ।
४.२.५२ विषयो देशे ।
४.२.५३ राजन्यादिभ्यो वुञ् ।
४.२.५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ।
४.२.५५ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ।
४.२.५६ संग्रामे प्रयोजनयोद्धृभ्यः ।
४.२.५७ तदस्यां प्रहरणमिति क्रीडायाम् णः ।
४.२.५८ घञः साऽस्यां क्रियेति ञः ।
४.२.५९ तदधीते तद्वेद ।
४.२.६० क्रतूक्थादिसूत्रान्ताट्ठक् ।

४.२.६१ क्रमादिभ्यो वुन् ।
४.२.६२ अनुब्राह्मणादिनिः ।
४.२.६३ वसन्तादिभ्यष्ठक् ।
४.२.६४ प्रोक्ताल्लुक् ।
४.२.६५ सूत्राच्च कोपधात् ।
४.२.६६ छन्दोब्राह्मणानि च तद्विषयाणि ।
४.२.६७ तदस्मिन्नस्तीति देशे तन्नाम्नि ।
४.२.६८ तेन निर्वृत्तम् ।
४.२.६९ तस्य निवासः ।
४.२.७० अदूरभवश्च ।
४.२.७१ ओरञ् ।
४.२.७२ मतोश्च बह्वजङ्गात् ।
४.२.७३ बह्वचः कूपेषु ।
४.२.७४ उदक् च विपाशः ।
४.२.७५ संकलादिभ्यश्च ।
४.२.७६ स्त्रीषु सौवीरसाल्वप्राक्षु ।
४.२.७७ सुवास्त्वादिभ्योऽण् ।
४.२.७८ रोणी ।
४.२.७९ कोपधाच्च ।
४.२.८० वुञ्छण्कठजिलशेनिरढञ्ण्ययफक्फिञिञ्ञ्य-
कक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाऽश्मसखि-
संकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः ।
४.२.८१ जनपदे लुप् ।
४.२.८२ वरणादिभ्यश्च ।
४.२.८३ शर्कराया वा ।
४.२.८४ ठक्छौ च ।
४.२.८५ नद्यां मतुप् ।
४.२.८६ मध्वादिभ्यश्च ।
४.२.८७ कुमुदनडवेतसेभ्यो ड्मतुप् ।
४.२.८८ नडशादाड्ड्वलच् ।
४.२.८९ शिखाया वलच् ।
४.२.९० उत्करादिभ्यश्छः ।
४.२.९१ नडादीनां कुक् च ।
४.२.९२ शेषे ।
४.२.९३ राष्ट्रावारपाराद्घखौ ।
४.२.९४ ग्रामाद्यखञौ ।
४.२.९५ कत्त्यादिभ्यो ढकञ् ।
४.२.९६ कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु ।
४.२.९७ नद्यादिभ्यो ढक् ।
४.२.९८ दक्षिणापश्चात्पुरसस्त्यक् ।
४.२.९९ कापिश्याः ष्फक् ।
४.२.१०० रंकोरमनुष्येऽण् च ।
४.२.१०१ द्युप्रागपागुदक्प्रतीचो यत् ।
४.२.१०२ कन्थायाष्ठक् ।
४.२.१०३ वर्णौ वुक् ।
४.२.१०४ अव्ययात्त्यप् ।
४.२.१०५ ऐषमोह्यःश्वसोऽन्यतरस्याम् ।
४.२.१०६ तीररूप्योत्तरपदादञ्ञौ ।
४.२.१०७ दिक्पूर्वपदादसंज्ञायां ञः ।
४.२.१०८ मद्रेभ्योऽञ् ।
४.२.१०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।
४.२.११० प्रस्थोत्तरपदपलद्यादिकोपधादण् ।
४.२.१११ कण्वादिभ्यो गोत्रे ।
४.२.११२ इञश्च ।
४.२.११३ न द्व्यचः प्राच्यभरतेषु ।
४.२.११४ वृद्धाच्छः ।
४.२.११५ भवतष्ठक्छसौ ।
४.२.११६ काश्यादिभ्यष्ठञ्ञिठौ ।
४.२.११७ वाहीकग्रामेभ्यश्च ।
४.२.११८ विभाषोशीनरेषु ।
४.२.११९ ओर्देशे ठञ् ।
४.२.१२० वृद्धात् प्राचाम् ।
४.२.१२१ धन्वयोपधाद्वुञ् ।
४.२.१२२ प्रस्थपुरवहान्ताच्च ।
४.२.१२३ रोपधेतोः प्राचाम् ।
४.२.१२४ जनपदतदवध्योश्च ।
४.२.१२५ अवृद्धादपि बहुवचनविषयात् ।
४.२.१२६ कच्छाग्निवक्त्रगर्त्तोत्तरपदात् ।
४.२.१२७ धूमादिभ्यश्च ।
४.२.१२८ नगरात् कुत्सनप्रावीण्ययोः ।
४.२.१२९ अरण्यान्मनुष्ये ।
४.२.१३० विभाषा कुरुयुगन्धराभ्याम् ।
४.२.१३१ मद्रवृज्योः कन् ।
४.२.१३२ कोपधादण् ।
४.२.१३३ कच्छादिभ्यश्च ।
४.२.१३४ मनुष्यतत्स्थयोर्वुञ् ।
४.२.१३५ अपदातौ साल्वात् ।
४.२.१३६ गोयवाग्वोश्च ।
४.२.१३७ गर्तोत्तरपदाच्छः ।
४.२.१३८ गहादिभ्यश्च ।
४.२.१३९ प्राचां कटादेः ।
४.२.१४० राज्ञः क च ।
४.२.१४१ वृद्धादकेकान्तखोपधात् ।
४.२.१४२ कन्थापलदनगरग्रामह्रदोत्तरपदात् ।
४.२.१४३ पर्वताच्च ।
४.२.१४४ विभाषाऽमनुष्ये ।

४.२.१४५ कृकणपर्णाद्भारद्वाजे ।
४.३.१ युष्मदस्मदोरन्यतरस्यां खञ् च ।
४.३.२ तस्मिन् नणि च युष्माकास्माकौ ।
४.३.३ तवकममकावेकवचने ।
४.३.४ अर्धाद्यत् ।
४.३.५ परावराधमोत्तमपूर्वाच्च ।
४.३.६ दिक्पूर्वपदाट्ठञ् च ।
४.३.७ ग्रामजनपदैकदेशादञ्ठञौ ।
४.३.८ मध्यान्मः ।
४.३.९ अ साम्प्रतिके ।
४.३.१० द्वीपादनुसमुद्रं यञ् ।
४.३.११ कालाट्ठञ् ।
४.३.१२ श्राद्धे शरदः ।
४.३.१३ विभाषा रोगातपयोः ।
४.३.१४ निशाप्रदोषाभ्यां च ।
४.३.१५ श्वसस्तुट् च ।
४.३.१६ संधिवेलाऽऽद्यृतुनक्षत्रेभ्योऽण् ।
४.३.१७ प्रावृष एण्यः ।
४.३.१८ वर्षाभ्यष्ठक् ।
४.३.१९ छन्दसि ठञ् ।
४.३.२० वसन्ताच्च ।
४.३.२१ हेमन्ताच्च ।
४.३.२२ सर्वत्राण् च तलोपश्च ।
४.३.२३ सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।
४.३.२४ विभाषा पूर्वाह्णापराह्णाभ्याम् ।
४.३.२५ तत्र जातः ।
४.३.२६ प्रावृषष्ठप् ।
४.३.२७ संज्ञायां शरदो वुञ् ।
४.३.२८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् ।
४.३.२९ पथः पन्थ च ।
४.३.३० अमावास्याया वा ।
४.३.३१ अ च ।
४.३.३२ सिन्ध्वपकराभ्यां कन् ।
४.३.३३ अणञौ च ।
४.३.३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त-
विशाखाऽषाढाबहुलाल्लुक् ।
४.३.३५ स्थानान्तगोशालखरशालाच्च ।
४.३.३६ वत्सशालाऽभिजिदश्वयुक्छतभिषजो वा ।
४.३.३७ नक्षत्रेभ्यो बहुलम् ।
४.३.३८ कृतलब्धक्रीतकुशलाः ।
४.३.३९ प्रायभवः ।
४.३.४० उपजानूपकर्णोपनीवेष्ठक् ।
४.३.४१ संभूते ।
४.३.४२ कोशाड्ढञ् ।
४.३.४३ कालात् साधुपुष्प्यत्पच्यमानेषु ।
४.३.४४ उप्ते च ।
४.३.४५ आश्वयुज्या वुञ् ।
४.३.४६ ग्रीष्मवसन्तादन्यतरस्याम् ।
४.३.४७ देयमृणे ।
४.३.४८ कलाप्यश्वत्थयवबुसाद्वुन् ।
४.३.४९ ग्रीष्मावरसमाद्वुञ् ।
४.३.५० संवत्सराग्रहायणीभ्यां ठञ् च ।
४.३.५१ व्याहरति मृगः ।
४.३.५२ तदस्य सोढम् ।
४.३.५३ तत्र भवः ।
४.३.५४ दिगादिभ्यो यत् ।
४.३.५५ शरीरावयवाच्च ।
४.३.५६ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।
४.३.५७ ग्रीवाभ्योऽण् च ।
४.३.५८ गम्भीराञ्ज्यः ।
४.३.५९ अव्ययीभावाच्च ।
४.३.६० अन्तःपूर्वपदाट्ठञ् ।
४.३.६१ ग्रामात् पर्यनुपूर्वात् ।
४.३.६२ जिह्वामूलाङ्गुलेश्छः ।
४.३.६३ वर्गान्ताच्च ।
४.३.६४ अशब्दे यत्खावन्यतरस्याम् ।
४.३.६५ कर्णललाटात् कनलंकारे ।
४.३.६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।
४.३.६७ बह्वचोऽन्तोदात्ताट्ठञ् ।
४.३.६८ क्रतुयज्ञेभ्यश्च ।
४.३.६९ अध्यायेष्वेवर्षेः ।
४.३.७० पौरोडाशपुरोडाशात् ष्ठन् ।
४.३.७१ छन्दसो यदणौ ।
४.३.७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरण-
नामाख्याताट्ठक् ।
४.३.७३ अणृगयनादिभ्यः ।
४.३.७४ तत आगतः ।
४.३.७५ ठगायस्थानेभ्यः ।
४.३.७६ शुण्डिकादिभ्योऽण् ।
४.३.७७ विद्यायोनिसंबन्धेभ्यो वुञ् ।
४.३.७८ ऋतश्ठञ् ।
४.३.७९ पितुर्यच्च ।
४.३.८० गोत्रादङ्कवत् ।
४.३.८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।
४.३.८२ मयट् च ।
४.३.८३ प्रभवति ।

४.३.८४ विदूराञ्ज्यः ।
४.३.८५ तद्गच्छति पथिदूतयोः ।
४.३.८६ अभिनिष्क्रामति द्वारम् ।
४.३.८७ अधिकृत्य कृते ग्रन्थे ।
४.३.८८ शिशुक्रन्दयमसभद्वंद्वेन्द्रजननादिभ्यश्छः ।
४.३.८९ सोऽस्य निवासः ।
४.३.९० अभिजनश्च ।
४.३.९१ आयुधजीविभ्यश्छः पर्वते ।
४.३.९२ शण्डिकादिभ्यो ञ्यः ।
४.३.९३ सिन्धुतक्षशिलाऽऽदिभ्योऽणञौ ।
४.३.९४ तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ।
४.३.९५ भक्तिः ।
४.३.९६ अचित्तादेशकालाट्ठक् ।
४.३.९७ महाराजाट्ठञ् ।
४.३.९८ वासुदेवार्जुनाभ्यां वुन् ।
४.३.९९ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ।
४.३.१०० जनपदिनां जनपदवत् सर्वं जनपदेन समानशब्दानां बहुवचने ।
४.३.१०१ तेन प्रोक्तम् ।
४.३.१०२ तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।
४.३.१०३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।
४.३.१०४ कलापिवैशम्पायनान्तेवासिभ्यश्च ।
४.३.१०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।
४.३.१०६ शौनकादिभ्यश्छन्दसि ।
४.३.१०७ कठचरकाल्लुक् ।
४.३.१०८ कलापिनोऽण् ।
४.३.१०९ छगलिनो ढिनुक् ।
४.३.११० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।
४.३.१११ कर्मन्दकृशाश्वादिनिः ।
४.३.११२ तेनैकदिक् ।
४.३.११३ तसिश्च ।
४.३.११४ उरसो यच्च ।
४.३.११५ उपज्ञाते ।
४.३.११६ कृते ग्रन्थे ।
४.३.११७ संज्ञायाम् ।
४.३.११८ कुलालादिभ्यो वुञ् ।
४.३.११९ क्षुद्राभ्रमरवटरपादपादञ् ।
४.३.१२० तस्येदम् ।
४.३.१२१ रथाद्यत् ।
४.३.१२२ पत्त्रपूर्वादञ् ।
४.३.१२३ पत्त्राध्वर्युपरिषदश्च ।
४.३.१२४ हलसीराट्ठक् ।
४.३.१२५ द्वंद्वाद्वुन् वैरमैथुनिकयोः ।
४.३.१२६ गोत्रचरणाद्वुञ् ।
४.३.१२७ संघाङ्कलक्षणेष्वञ्यञिञामण् ।
४.३.१२८ शाकलाद्वा ।
४.३.१२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ज्यः ।
४.३.१३० न दण्डमाणवान्तेवासिषु ।
४.३.१३१ रैवतिकादिभ्यश्छः ।
४.३.१३२ कौपिञ्जलहास्तिपदादण् ।
४.३.१३३ आथर्वणिकस्येकलोपश्च ।
४.३.१३४ तस्य विकारः ।
४.३.१३५ अवयवे च प्राण्योषधिवृक्षेभ्यः ।
४.३.१३६ बिल्वादिभ्योऽण् ।
४.३.१३७ कोपधाच्च ।
४.३.१३८ त्रपुजतुनोः षुक् ।
४.३.१३९ ओरञ् ।
४.३.१४० अनुदात्तादेश्च ।
४.३.१४१ पलाशादिभ्यो वा ।
४.३.१४२ शम्याष्ट्लञ् ।
४.३.१४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।
४.३.१४४ नित्यं वृद्धशरादिभ्यः ।
४.३.१४५ गोश्च पुरीषे ।
४.३.१४६ पिष्टाच्च ।
४.३.१४७ संज्ञायां कन् ।
४.३.१४८ व्रीहेः पुरोडाशे ।
४.३.१४९ असंज्ञायां तिलयवाभ्याम् ।
४.३.१५० द्व्यचश्छन्दसि ।
४.३.१५१ नोत्वद्वर्ध्रबिल्वात् ।
४.३.१५२ तालादिभ्योऽण् ।
४.३.१५३ जातरूपेभ्यः परिमाणे ।
४.३.१५४ प्राणिरजतादिभ्योऽञ् ।
४.३.१५५ ञितश्च तत्प्रत्ययात् ।
४.३.१५६ क्रीतवत् परिमाणात् ।
४.३.१५७ उष्ट्राद्वुञ् ।
४.३.१५८ उमोर्णयोर्वा ।
४.३.१५९ एण्या ढञ् ।
४.३.१६० गोपयसोर्यत् ।
४.३.१६१ द्रोश्च ।
४.३.१६२ माने वयः ।
४.३.१६३ फले लुक् ।
४.३.१६४ प्लक्षादिभ्योऽण् ।
४.३.१६५ जम्ब्वा वा ।
४.३.१६६ लुप् च ।
४.३.१६७ हरीतक्यादिभ्यश्च ।
४.३.१६८ कंसीयपरशव्ययोर्यञञौ लुक् च ।

४.४.१ प्राग्वहतेष्ठक् ।
४.४.२ तेन दीव्यति खनति जयति जितम् ।
४.४.३ संस्कृतम् ।
४.४.४ कुलत्थकोपधादण् ।
४.४.५ तरति ।
४.४.६ गोपुच्छाट्ठञ् ।
४.४.७ नौद्व्यचष्ठन् ।
४.४.८ चरति ।
४.४.९ आकर्षात् ष्ठल् ।
४.४.१० पर्पादिभ्यः ष्ठन् ।
४.४.११ श्वगणाट्ठञ्च ।
४.४.१२ वेतनादिभ्यो जीवति ।
४.४.१३ वस्नक्रयविक्रयाट्ठन् ।
४.४.१४ आयुधाच्छ च ।
४.४.१५ हरत्युत्सङ्गादिभ्यः ।
४.४.१६ भस्त्राऽऽदिभ्यः ष्ठन् ।
४.४.१७ विभाषा विवधवीवधात् ।
४.४.१८ अण् कुटिलिकायाः ।
४.४.१९ निर्वृत्तेऽक्षद्यूतादिभ्यः ।
४.४.२० क्त्रेर्मम् नित्यं ।
४.४.२१ अपमित्ययाचिताभ्यां कक्कनौ ।
४.४.२२ संसृष्टे ।
४.४.२३ चूर्णादिनिः ।
४.४.२४ लवणाल्लुक् ।
४.४.२५ मुद्गादण् ।
४.४.२६ व्यञ्जनैरुपसिक्ते ।
४.४.२७ ओजस्सहोऽम्भसा वर्तते ।
४.४.२८ तत् प्रत्यनुपूर्वमीपलोमकूलम् ।
४.४.२९ परिमुखं च ।
४.४.३० प्रयच्छति गर्ह्यम् ।
४.४.३१ कुसीददशैकादशात् ष्ठन्ष्ठचौ ।
४.४.३२ उञ्छति ।
४.४.३३ रक्षति ।
४.४.३४ शब्ददर्दुरं करोति ।
४.४.३५ पक्षिमत्स्यमृगान् हन्ति ।
४.४.३६ परिपन्थं च तिष्ठति ।
४.४.३७ माथोत्तरपदपदव्यनुपदं धावति ।
४.४.३८ आक्रन्दाट्ठञ्च ।
४.४.३९ पदोत्तरपदं गृह्णाति ।
४.४.४० प्रतिकण्ठार्थललामं च ।
४.४.४१ धर्मं चरति ।
४.४.४२ प्रतिपथमेति ठंश्च ।
४.४.४३ समवायान् समवैति ।
४.४.४४ परिषदो ण्यः ।
४.४.४५ सेनाया वा ।
४.४.४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति ।
४.४.४७ तस्य धर्म्यम् ।
४.४.४८ अण् महिष्यादिभ्यः ।
४.४.४९ ऋतोऽञ् ।
४.४.५० अवक्रयः ।
४.४.५१ तदस्य पण्यम् ।
४.४.५२ लवणाट्ठञ् ।
४.४.५३ किशरादिभ्यः ष्ठन् ।
४.४.५४ शलालुनोऽन्यतरस्याम् ।
४.४.५५ शिल्पम् ।
४.४.५६ मड्डुकझर्झरादणन्यतरस्याम् ।
४.४.५७ प्रहरणम् ।
४.४.५८ परश्वधाट्ठञ्च ।
४.४.५९ शक्तियष्ट्योरीकक् ।
४.४.६० अस्तिनास्तिदिष्टं मतिः ।
४.४.६१ शीलम् ।
४.४.६२ छत्रादिभ्यो णः ।
४.४.६३ कर्माध्ययने वृत्तम् ।
४.४.६४ बह्वच्पूर्वपदाट्ठच् ।
४.४.६५ हितं भक्षाः ।
४.४.६६ तदस्मै दीयते नियुक्तम् ।
४.४.६७ श्राणामांसौदनाट्टिठन् ।
४.४.६८ भक्तादणन्यतरस्याम् ।
४.४.६९ तत्र नियुक्तः ।
४.४.७० अगारान्ताट्ठन् ।
४.४.७१ अध्यायिन्यदेशकालात् ।
४.४.७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।
४.४.७३ निकटे वसति ।
४.४.७४ आवसथात् ष्ठल् ।
४.४.७५ प्राग्घिताद्यत् ।
४.४.७६ तद्वहति रथयुगप्रासङ्गम् ।
४.४.७७ धुरो यड्ढकौ ।
४.४.७८ खः सर्वधुरात् ।
४.४.७९ एकधुराल्लुक् च ।
४.४.८० शकटादण् ।
४.४.८१ हलसीराट्ठक् ।
४.४.८२ संज्ञायां जन्याः ।
४.४.८३ विध्यत्यधनुषा ।
४.४.८४ धनगणं लब्धा ।
४.४.८५ अन्नाण्णः ।
४.४.८६ वशं गतः ।

४.४.८७ पदमस्मिन् दृश्यम् ।
४.४.८८ मूलमस्याबर्हि ।
४.४.८९ संज्ञायां धेनुष्या ।
४.४.९० गृहपतिना संयुक्ते ञ्यः ।
४.४.९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्य-वध्यानाम्यसमसमितसम्मितेषु ।
४.४.९२ धर्मपथ्यर्थन्यायादनपेते ।
४.४.९३ छन्दसो निर्मिते ।
४.४.९४ उरसोऽण् च ।
४.४.९५ हृदयस्य प्रियः ।
४.४.९६ बन्धने चर्षौ ।
४.४.९७ मतजनहलात् करणजल्पकर्षेषु ।
४.४.९८ तत्र साधुः ।
४.४.९९ प्रतिजनादिभ्यः खञ् ।
४.४.१०० भक्ताण्णः ।
४.४.१०१ परिषदो ण्यः ।
४.४.१०२ कथाऽऽदिभ्यष्ठक् ।
४.४.१०३ गुडादिभ्यष्ठञ् ।
४.४.१०५ सभाया यः ।
४.४.१०६ ढश्छन्दसि ।
४.४.१०७ समानतीर्थे वासी ।
४.४.१०८ समानोदरे शयित ओ चोदात्तः ।
४.४.१०९ सोदराद्यः ।
४.४.११० भवे छन्दसि ।
४.४.१११ पाथोनदीभ्यां ड्यण् ।
४.४.११२ वेशन्तहिमवद्भ्यामण् ।
४.४.११३ स्रोतसो विभाषा ड्यड्ड्यौ ।
४.४.११४ सगर्भसयूथसनुताद्यन् ।
४.४.११५ तुग्राद्घन् ।
४.४.११६ अग्राद्यत् ।
४.४.११७ घच्छौ च ।
४.४.११८ समुद्राभ्राद्घः ।
४.४.११९ बर्हिषि दत्तम् ।
४.४.१२० दूतस्य भागकर्मणी ।
४.४.१२१ रक्षोयातूनां हननी ।
४.४.१२२ रेवतीजगतीहविष्याभ्यः प्रशस्ये ।
४.४.१२३ असुरस्य स्वम् ।
४.४.१२४ मायायामण् ।
४.४.१२५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ।
४.४.१२६ अश्विमानण् ।
४.४.१२७ वयस्यासु मूर्ध्नो मतुप् ।
४.४.१२८ मत्वर्थे मासतन्वोः ।
४ ४.१२९ मधोर्ञ च ।
४.४.१३० ओजसोऽहनि यत्खौ ।
४.४.१३१ वेशोयशआदेर्भगाद्यल् ।
४.४.१३२ ख च ।
४.४.१३३ पूर्वैः कृतमिनियौ च ।
४.४.१३४ अद्भिः संस्कृतम् ।
४.४.१३५ सहस्रेण संमितौ घः ।
४.४.१३६ मतौ च ।
४.४.१३७ सोममर्हति यः ।
४.४.१३८ मये च ।
४.४.१३९ मधोः ।
४.४.१४० वसोः समूहे च ।
४.४.१४१ नक्षत्राद्घः ।
४.४.१४२ सर्वदेवात् तातिल् ।
४.४.१४३ शिवशमरिष्टस्य करे ।
४.४.१४४ भावे च ।

---

५.१.१ प्राक् क्रीताच्छः ।
५.१.२ उगवादिभ्योऽत् ।
५.१.३ कम्बलाच्च संज्ञायाम् ।
५.१.४ विभाषा हविरपूपादिभ्यः ।
५.१.५ तस्मै हितम् ।
५.१.६ शरीरावयवाद्यत् ।
५.१.७ खलयवमाषतिलवृषब्रह्मणश्च ।
५.१.८ अजाविभ्यां थ्यन् ।
५.१.९ आत्मन्विश्वजनभोगोत्तरपदात् खः ।
५.१.१० सर्वपुरुषाभ्यां णढञौ ।
५.१.११ माणवचरकाभ्यां खञ् ।
५.१.१२ तदर्थं विकृतेः प्रकृतौ ।
५.१.१३ छदिरुपधिबलेः ढञ् ।
५.१.१४ ऋषभोपानहोर्ञ्यः ।
५.१.१५ चर्म्मणोऽञ् ।
५.१.१६ तदस्य तदस्मिन् स्यादिति ।
५.१.१७ परिखाया ढञ् ।
५.१.१८ प्राग्वतेष्ठञ् ।
५.१.१९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ।
५.१.२० असमासे निष्कादिभ्यः ।
५.१.२१ शताच्च ठन्यतावशते ।
५.१.२२ संख्याया अतिशदन्तायाः कन् ।
५.१.२३ वतोरिड्वा ।
५.१.२४ विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् ।
५.१.२५ कंसाट्टिठन् ।
५.१.२६ शूर्पादञन्यतरस्याम् ।
५.१.२७ शतमानविंशतिकसहस्रवसनादण् ।
५.१.२८ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ।

५.१.२९ विभाषा कार्षापणसहस्राभ्याम् ।
५.१.३० द्वित्रिपूर्वान्निष्कात् ।
५.१.३१ बिस्ताच्च ।
५.१.३२ विंशतिकात् खः ।
५.१.३३ खार्या ईकन् ।
५.१.३४ पणपादमाषशतादत् ।
५.१.३५ शाणाद्वा ।
५.१.३६ द्वित्रिपूर्वादण् च ।
५.१.३७ तेन क्रीतम् ।
५.१.३८ तस्य निमित्तं संयोगोत्पातौ ।
५.१.३९ गोद्व्यचोरसंख्यापरिमाणाश्वादेर्यत् ।
५.१.४० पुत्राच्छ च ।
५.१.४१ सर्वभूमिपृथिवीभ्यामणञौ ।
५.१.४२ तस्येश्वरः ।
५.१.४३ तत्र विदित इति च ।
५.१.४४ लोकसर्वलोकाट्ठञ् ।
५.१.४५ तस्य वापः ।
५.१.४६ पात्रात् ष्ठन् ।
५.१.४७ तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ।
५.१.४८ पूरणार्धाट्ठन् ।
५.१.४९ भागाद्यच्च ।
५.१.५० तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।
५.१.५१ वस्नद्रव्याभ्यां ठन्कनौ ।
५.१.५२ सम्भवत्यवहरति पचति ।
५.१.५३ आढकाचितपात्रात् खोऽन्यतरयाम् ।
५.१.५४ द्विगोष्ठंश्च ।
५.१.५५ कुलिजाल्लुक्खौ च ।
५.१.५६ सोऽस्यांशवस्नभृतयः ।
५.१.५७ तदस्य परिमाणम् ।
५.१.५८ संख्यायाः संज्ञासंघसूत्राध्ययनेषु ।
५.१.५९ पङ्क्तिविंशतित्रिंशत्चत्वारिंशत्पञ्चाशत्षष्टि-
सप्तत्यशीतिनवतिशतम् ।
५.१.६० पञ्चद्दशतौ वर्गे वा ।
५.१.६१ सप्तनोऽञ् छन्दसि ।
५.१.६२ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ।
५.१.६३ तद् अर्हति ।
५.१.६४ छेदादिभ्यो नित्यम् ।
५.१.६५ शीर्षच्छेदाद्यच्च ।
५.१.६६ दण्डादिभ्यः ।
५.१.६७ छन्दसि च ।
५.१.६८ पात्राद्घंश्च ।
५.१.६९ कडङ्गरदक्षिणाच्छ च ।
५.१.७० स्थालीबिलात् ।
५.१.७१ यज्ञर्त्विग्भ्यां घखञौ ।
५.१.७२ पारायणतुरायणचान्द्रायणं वर्तयति ।
५.१.७३ संशयमापन्नः ।
५.१.७४ योजनं गच्छति ।
५.१.७५ पथः ष्कन् ।
५.१.७६ पन्थो ण नित्यम् ।
५.१.७७ उत्तरपथेनाहृतं च ।
५.१.७८ कालात् ।
५.१.७९ तेन निर्वृत्तम् ।
५.१.८० तमधीष्टो भृतो भूतो भावी ।
५.१.८१ मासाद्वयसि यत्खञौ ।
५.१.८२ द्विगोर्यप् ।
५.१.८३ षण्मासाण्ण्यच्च ।
५.१.८४ अवयसि ठंश्च ।
५.१.८५ समायाः खः ।
५.१.८६ द्विगोर्वा ।
५.१.८७ रात्र्यहस्संवत्सराच्च ।
५.१.८८ वर्षाल्लुक् च ।
५.१.८९ चित्तवति नित्यम् ।
५.१.९० षष्टिकाः षष्टिरात्रेण पच्यन्ते ।
५.१.९१ वत्सरान्ताच्छश्छन्दसि ।
५.१.९२ सम्परिपूर्वात् ख च ।
५.१.९३ तेन परिजय्यलभ्यकार्यसुकरम् ।
५.१.९४ तदस्य ब्रह्मचर्यम् ।
५.१.९५ तस्य च दक्षिणा यज्ञाख्येभ्यः ।
५.१.९६ तत्र च दीयते कार्यं भववत् ।
५.१.९७ व्युष्टादिभ्योऽण् ।
५.१.९८ तेन यथाकथाचहस्ताभ्यां णयतौ ।
५.१.९९ सम्पादिनि ।
५.१.१०० कर्म षाद्यत् ।
५.१.१०१ तस्मै प्रभवति संतापादिभ्यः ।
५.१.१०२ योगाद्यच्च ।
५.१.१०३ कर्मण उकञ् ।
५.१.१०४ समयस्तदस्य प्राप्तम् ।
५.१.१०५ ऋतोरण् ।
५.१.१०६ छन्दसि घस् ।
५.१.१०७ कालाद्यत् ।
५.१.१०८ प्रकृष्टे ठञ् ।
५.१.१०९ प्रयोजनम् ।
५.१.११० विशाखाऽऽषाढादण् मन्थदण्डयोः ।
५.१.१११ अनुप्रवचनादिभ्यश्छः ।
५.१.११२ समापनात् सपूर्वपदात् ।
५.१.११३ ऐकागारिकट् चौरे ।

५.१.११४ आकालिकडाद्यन्तवचने ।
५.१.११५ तेन तुल्यं क्रिया चेद्वतिः ।
५.१.११६ तत्र तस्येव ।
५.१.११७ तदर्हम् ।
५.१.११८ उपसर्गाच्छन्दसि धात्वर्थे ।
५.१.११९ तस्य भावस्त्वतलौ ।
५.१.१२० आ च त्वात् ।
५.१.१२१ न
नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतर-
सलसेभ्यः ।
५.१.१२२ पृथ्वादिभ्य इमनिज्वा ।
५.१.१२३ वर्णदृढादिभ्यः ष्यञ् च ।
५.१.१२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च ।
५.१.१२५ स्तेनाद्यन्नलोपश्च ।
५.१.१२६ सख्युर्यः ।
५.१.१२७ कपिज्ञात्योर्ढक् ।
५.१.१२८ पत्यन्तपुरोहितादिभ्यो यक् ।
५.१.१२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।
५.१.१३० हायनान्तयुवादिभ्योऽण् ।
५.१.१३१ इगन्ताच्च लघुपूर्वात् ।
५.१.१३२ योपधाद्गुरूपोत्तमाद्वुञ् ।
५.१.१३३ द्वंद्वमनोज्ञादिभ्यश्च ।
५.१.१३४ गोत्रचरणाच्श्लाघाऽत्याकारतदवेतेषु ।
५.१.१३५ होत्राभ्यश्छः ।
५.१.१३६ ब्रह्मणस्त्वः ।
५.२.१ धान्यानां भवने क्षेत्रे खञ् ।
५.२.२ व्रीहिशाल्योर्ढक् ।
५.२.३ यवयवकषष्टिकादत् ।
५.२.४ विभाषा तिलमाषोमाभङ्गाऽणुभ्यः ।
५.२.५ सर्वचर्मणः कृतः खखञौ ।
५.२.६ यथामुखसंमुखस्य दर्शनः खः ।
५.२.७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।
५.२.८ आप्रपदं प्राप्नोति ।
५.२.९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ।
५.२.१० परोवरपरम्परपुत्रपौत्रमनुभवति ।
५.२.११ अवारपारात्यन्तानुकामं गामी ।
५.२.१२ समांसमां विजायते ।
५.२.१३ अद्यश्वीनाऽवष्टब्धे ।
५.२.१४ आगवीनः ।
५.२.१५ अनुग्वलंगामी ।
५.२.१६ अध्वनो यत्खौ ।
५.२.१७ अभ्यमित्राच्छ च ।
५.२.१८ गोष्ठात् खञ् भूतपूर्वे ।
५.२.१९ अश्वस्यैकाहगमः ।
५.२.२० शालीनकौपीने अधृष्टाकार्ययोः ।
५.२.२१ व्रातेन जीवति ।
५.२.२२ साप्तपदीनं सख्यम् ।
५.२.२३ हैयंगवीनं संज्ञायाम् ।
५.२.२४ तस्य पाकमूले पील्वदिकर्णादिभ्यः कुणब्जाहचौ ।
५.२.२५ पक्षात्तिः ।
५.२.२६ तेन वित्तश्चुञ्चुप्चणपौ ।
५.२.२७ विनञ्भ्यां नानाञौ नसह ।
५.२.२८ वेः शालच्छङ्कटचौ ।
५.२.२९ सम्प्रोदश्च कटच् ।
५.२.३० अवात् कुटारच्च ।
५.२.३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्राटचः ।
५.२.३२ नेर्बिडज्बिरीसचौ ।
५.२.३३ इनच्पिटच्चिकचि च ।
५.२.३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः ।
५.२.३५ कर्मणि घटोऽठच् ।
५.२.३६ तदस्य संजातं तारकाऽऽदिभ्य इतच् ।
५.२.३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।
५.२.३८ पुरुषहस्तिभ्यामण् च ।
५.२.३९ यद्तदेतेभ्यः परिमाणे वतुप् ।
५.२.४० किमिदंभ्यां वो घः ।
५.२.४१ किमः संख्यापरिमाणे डति च ।
५.२.४२ संख्याया अवयवे तयप् ।
५.२.४३ द्वित्रिभ्यां तयस्यायज्वा ।
५.२.४४ उभादुदात्तो नित्यम् ।
५.२.४५ तदस्मिन्नधिकमिति दशान्ताड्डः ।
५.२.४६ शदन्तविंशतेश्च ।
५.२.४७ संख्याया गुणस्य निमाने मयट् ।
५.२.४८ तस्य पूरणे डट् ।
५.२.४९ नान्तादसंख्याऽऽदेर्मट् ।
५.२.५० थट् च च्छन्दसि ।
५.२.५१ षट्कतिकतिपयचतुरां थुक् ।
५.२.५२ बहुपूगगणसंघस्य तिथुक् ।
५.२.५४ द्वेस्तीयः ।
५.२.५५ त्रेः सम्प्रसारणम् च ।
५.२.५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् ।
५.२.५७ नित्यं शतादिमासार्धमाससंवत्सराच्च ।
५.२.५८ षष्ट्यादेश्चासंख्याऽऽदेः ।
५.२.५९ मतौ च्छः सूक्तसाम्नोः ।
५.२.६० अध्यायानुवाकयोर्लुक् ।
५.२.६१ विमुक्तादिभ्योऽण् ।
५.२.६२ गोषदादिभ्यो वुन् ।

५.२.६३ तत्र कुशलः पथः ।
५.२.६४ आकर्षादिभ्यः कन् ।
५.२.६५ धनहिरण्यात् कामे ।
५.२.६६ स्वाङ्गेभ्यः प्रसिते ।
५.२.६७ उदराट्ठगाद्यूने ।
५.२.६८ सस्येन परिजातः ।
५.२.६९ अंशं हारी ।
५.२.७० तन्त्रादचिरापहृते ।
५.२.७१ ब्राह्मणकोष्णिके संज्ञायाम् ।
५.२.७२ शीतोष्णाभ्यां कारिणि ।
५.२.७३ अधिकम् ।
५.२.७४ अनुकाभिकाभीकः कमिता ।
५.२.७५ पार्श्वेनान्विच्छति ।
५.२.७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ।
५.२.७७ तावतिथं ग्रहणमिति लुग्वा ।
५.२.७८ स एषां ग्रामणीः ।
५.२.७९ शृङ्खलमस्य बन्धनं करभे ।
५.२.८० उत्क उन्मनाः ।
५.२.८१ कालप्रयोजनाद्रोगे ।
५.२.८२ तदस्मिन्नन्नं प्राये संज्ञायाम् ।
५.२.८३ कुल्माषादञ् ।
५.२.८४ श्रोत्रियंश्छन्दोऽधीते ।
५.२.८५ श्राद्धमनेन भुक्तमिनिठनौ ।
५.२.८६ पूर्वादिनिः ।
५.२.८७ सपूर्वाच्च ।
५.२.८८ इष्टादिभ्यश्च ।
५.२.८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।
५.२.९० अनुपद्यन्वेष्टा ।
५.२.९१ साक्षाद्द्रष्टरि संज्ञायाम् ।
५.२.९२ क्षेत्रियच् परक्षेत्रे चिकित्स्यः ।
५.२.९३
इन्द्रियमिन्द्रलिंगमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टम्-
इन्द्रदत्तमिति वा ।
५.२.९४ तदस्यास्त्यस्मिन्निति मतुप् ।
५.२.९५ रसादिभ्यश्च ।
५.२.९६ प्राणिस्थादातो लजन्यतरस्याम् ।
५.२.९७ सिध्मादिभ्यश्च ।
५.२.९८ वत्सांसाभ्यां कामबले ।
५.२.९९ फेनादिलच् च ।
५.२.१०० लोमादिपामादिपिच्छादिभ्यः शनेलचः ।
५.२.१०१ प्रज्ञाश्रद्धाऽर्चावृत्तिभ्यो णः ।
५.२.१०२ तपःसहस्राभ्यां विनीनी ।
५.२.१०३ अण् च ।
५.२.१०४ सिकताशर्कराभ्यां च ।
५.२.१०५ देशे लुबिलचौ च ।
५.२.१०६ दन्त उन्नत उरच् ।
५.२.१०७ ऊषसुषिमुष्कमधो रः ।
५.२.१०८ द्युद्रुभ्यां मः ।
५.२.१०९ केशाद्वोऽन्यतरस्याम् ।
५.२.११० गाण्ड्यजगात् संज्ञायाम् ।
५.२.१११ काण्डाण्डादीरन्नीरचौ ।
५.२.११२ रजःकृष्यासुतिपरिषदो वलच् ।
५.२.११३ दन्तशिखात् संज्ञायाम् ।
५.२.११४ ज्योत्स्नातमिस्राशृङ्गिणोजस्विन्नूर्जस्वलगोमिन्-
मलिनमलीमसाः ।
५.२.११५ अत इनिठनौ ।
५.२.११६ व्रीह्यादिभ्यश्च ।
५.२.११७ तुन्दादिभ्य इलच् च ।
५.२.११८ एकगोपूर्वाट्ठञ् नित्यम् ।
५.२.११९ शतसहस्रान्ताच्च निष्कात् ।
५.२.१२० रूपादाहतप्रशंसयोरप् ।
५.२.१२१ अस्मायामेधास्रजो विनिः ।
५.२.१२२ बहुलं छन्दसि ।
५.२.१२३ ऊर्णाया युस् ।
५.२.१२४ वाचो ग्मिनिः ।
५.२.१२५ आलजाटचौ बहुभाषिणि ।
५.२.१२६ स्वामिन्नैश्वर्ये ।
५.२.१२७ अर्शआदिभ्योऽच् ।
५.२.१२८ द्वंद्वोपतापगर्ह्यात् प्राणिस्थादिनिः ।
५.२.१२९ वातातिसाराभ्यां कुक् च ।
५.२.१३० वयसि पूरणात् ।
५.२.१३१ सुखादिभ्यश्च ।
५.२.१३२ धर्मशीलवर्णान्ताच्च ।
५.२.१३३ हस्ताज्जातौ ।
५.२.१३४ वर्णाद्ब्रह्मचारिणि ।
५.२.१३५ पुष्करादिभ्यो देशे ।
५.२.१३६ बलादिभ्यो मतुबन्यतरस्याम् ।
५.२.१३७ संज्ञायां मन्माभ्याम् ।
५.२.१३८ कंशंभ्यां बभयुस्तितुतयसः ।
५.२.१३९ तुन्दिवलिवटेर्भः ।
५.२.१४० अहंशुभमोर्युस् ।
५.३.१ प्राग्दिशो विभक्तिः ।
५.३.२ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ।
५.३.३ इदम इश् ।
५.३.४ एतेतौ रथोः ।
५.३.५ एतदोऽश् ।

५.३.६ सर्वस्य सोऽन्यतरस्यां दि ।
५.३.७ पञ्चम्यास्तसिल् ।
५.३.८ तसेश्च ।
५.३.९ पर्यभिभ्यां च ।
५.३.१० सप्तम्यास्त्रल् ।
५.३.११ इदमो हः ।
५.३.१२ किमोऽत् ।
५.३.१३ वा ह च च्छन्दसि ।
५.३.१४ इतराभ्योऽपि दृश्यन्ते ।
५.३.१५ सर्वैकान्यकिंयत्तदः काले दा ।
५.३.१६ इदमो र्हिल् ।
५.३.१७ अधुना ।
५.३.१८ दानीं च ।
५.३.१९ तदो दा च ।
५.३.२० तयोर्दार्हिलौ च च्छन्दसि ।
५.३.२१ अनद्यतने र्हिलन्यतरस्याम् ।
५.३.२२ सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युर्-
अन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।
५.३.२३ प्रकारवचने थाल् ।
५.३.२४ इदमस्थमुः ।
५.३.२५ किमश्च ।
५.३.२६ था हेतौ च च्छन्दसि ।
५.३.२७ दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो
दिग्देशकालेष्वस्तातिः ।
५.३.२८ दक्षिणोत्तराभ्यामतसुच् ।
५.३.२९ विभाषा परावराभ्याम् ।
५.३.३० अञ्चेर्लुक् ।
५.३.३१ उपर्युपरिष्टात् ।
५.३.३२ पश्चात् ।
५.३.३३ पश्च पश्चा च च्छन्दसि ।
५.३.३४ उत्तराधरदक्षिणादातिः ।
५.३.३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः ।
५.३.३६ दक्षिणादाच् ।
५.३.३७ आहि च दूरे ।
५.३.३८ उत्तराच्च ।
५.३.३९ पूर्वाधरावराणामसि पुरधवश्चैषाम् ।
५.३.४० अस्ताति च ।
५.३.४१ विभाषाऽवरस्य ।
५.३.४२ संख्याया विधाऽर्थे धा ।
५.३.४३ अधिकरणविचाले च ।
५.३.४४ एकाद्धो ध्यमुञन्यारयाम् ।
५.३.४५ द्वित्र्योश्च धमुञ् ।
५.३.४६ एधाच्च ।
५.३.४७ याप्ये पाशप् ।
५.३.४८ पूरणाद्भागे तीयादन् ।
५.३.४९ प्रागेकादशभ्योऽच्छन्दसि ।
५.३.५० षष्ठाष्टमाभ्यां ञ च ।
५.३.५१ मानपश्वङ्गयोः कन्लुकौ च ।
५.३.५२ एकादाकिनिच्चासहाये ।
५.३.५३ भूतपूर्वे चरट् ।
५.३.५४ षष्ठ्या रूप्य च ।
५.३.५५ अतिशायने तमबिष्ठनौ ।
५.३.५६ तिङश्च ।
५.३.५७ द्विवचनविभज्योपपदे तरबीयसुनौ ।
५.३.५८ अजादी गुणवचनादेव ।
५.३.५९ तुश्छन्दसि ।
५.३.६० प्रशस्यस्य श्रः ।
५.३.६१ ज्य च ।
५.३.६२ वृद्धस्य च ।
५.३.६३ अन्तिकबाढयोर्नेदसाधौ ।
५.३.६४ युवाल्पयोः कनन्यतरस्याम् ।
५.३.६५ विन्मतोर्लुक् ।
५.३.६६ प्रशंसायां रूपप् ।
५.३.६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।
५.३.६८ विभाषा सुपो बहुच् पुरस्तात्तु ।
५.३.६९ प्रकारवचने जातीयर्।
५.३.७० प्रागिवात्कः ।
५.३.७१ अव्ययसर्वनाम्नामकच् प्राक् टेः ।
५.३.७२ कस्य च दः ।
५.३.७३ अज्ञाते ।
५.३.७४ कुत्सिते ।
५.३.७५ संज्ञायां कन् ।
५.३.७६ अनुकम्पायाम् ।
५.३.७७ नीतौ च तद्युक्तात् ।
५.३.७८ बह्वचो मनुष्यनाम्नष्ठज्वा ।
५.३.७९ घनिलचौ च ।
५.३.८० प्राचामुपादेरडज्वुचौ च ।
५.३.८१ जातिनाम्नः कन् ।
५.३.८२ अजिनान्तस्योत्तरपदलोपश्च ।
५.३.८३ ठाजादावूर्ध्वं द्वितीयादचः ।
५.३.८४ शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ।
५.३.८५ अल्पे ।
५.३.८६ ह्रस्वे ।
५.३.८७ संज्ञायां कन् ।
५.३.८८ कुटीशमीशुण्डाभ्यो रः ।
५.३.८९ कुत्वा डुपच् ।

५.३.९० कासूगोणीभ्यां ष्टरच् ।
५.३.९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।
५.३.९२ किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् ।
५.३.९३ वा बहूनां जातिपरिप्रश्ने डतमच् ।
५.३.९४ एकाच्च प्राचाम् ।
५.३.९५ अवक्षेपणे कन् ।
५.३.९६ इवे प्रतिकृतौ ।
५.३.९७ संज्ञायां च ।
५.३.९८ लुम्मनुष्ये ।
५.३.९९ जीविकाऽर्थे चापण्ये ।
५.३.१०० देवपथादिभ्यश्च ।
५.३.१०१ वस्तेर्ढञ् ।
५.३.१०२ शिलाया ढः ।
५.३.१०३ शाखाऽऽदिभ्यो यत् ।
५.३.१०४ द्रव्यं च भव्ये ।
५.३.१०५ कुशाग्राच्छः ।
५.३.१०६ समासाच्च तद्विषयात् ।
५.३.१०७ शर्कराऽऽदिभ्योऽण् ।
५.३.१०८ अङ्गुल्यादिभ्यष्ठक् ।
५.३.१०९ एकशालायाष्ठजन्यतरस्याम् ।
५.३.११० कर्कलोहितादीकक् ।
५.३.१११ प्रत्नपूर्वविश्वेमात्थाल् छन्दसि ।
५.३.११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ।
५.३.११३ व्रातच्फञोरस्त्रियाम् ।
५.३.११४ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ।
५.३.११५ वृकाट्टेण्यण् ।
५.३.११६ दामन्यादित्रिगर्तषष्ठाच्छः ।
५.३.११७ पर्श्वादियौधेयादिभ्यामणञौ ।
५.३.११८
अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ।
५.३.११९ ञ्यादयस्तद्राजाः ।
५.४.१ पादशतस्य संख्याऽऽदेर्वीप्सायां वुन् लोपश्च ।
५.४.२ दण्डव्यवसर्गयोश्च ।
५.४.३ स्थूलादिभ्यः प्रकारवचने कन् ।
५.४.४ अनत्यन्तगतौ क्तात् ।
५.४.५ न सामिवचने ।
५.४.६ बृहत्या आच्छादने ।
५.४.७ अषडक्षाशितङ्ग्वलंकर्मालम्पुरुषाध्युत्तरपदात् खः ।
५.४.८ विभाषा अञ्चेरदिक्स्त्रियाम् ।
५.४.९ जात्यन्ताच्छ बन्धुनि ।
५.४.१० स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।
५.४.११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।
५.४.१२ अमु च च्छन्दसि ।
५.४.१३ अनुगादिनष्ठक् ।
५.४.१४ णचः स्त्रियामञ् ।
५.४.१५ अणिनुणः ।
५.४.१६ विसारिणो मत्स्ये ।
५.४.१७ संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच् ।
५.४.१८ द्वित्रिचतुर्भ्यः सुच् ।
५.४.१९ एकस्य सकृच्च ।
५.४.२० विभाषा बहोर्धाऽविप्रकृष्टकाले ।
५.४.२१ तत्प्रकृतवचने मयट् ।
५.४.२२ समूहवच्च बहुषु ।
५.४.२३ अनन्तावसथेतिहभेषजाञ्ञ्यः ।
५.४.२४ देवतान्तात्तादर्थ्ये यत् ।
५.४.२५ पादार्घाभ्यां च ।
५.४.२६ अतिथेर्ञ्यः ।
५.४.२७ देवात्तल् ।
५.४.२८ अवेः कः ।
५.४.२९ यावादिभ्यः कन् ।
५.४.३० लोहितान्मणौ ।
५.४.३१ वर्णे चानित्ये ।
५.४.३२ रक्ते ।
५.४.३३ कालाच्च ।
५.४.३४ विनयादिभ्यष्ठक् ।
५.४.३५ वाचो व्याहृतार्थायाम् ।
५.४.३६ तद्युक्तात् कर्मणोऽण् ।
५.४.३७ ओषधेरजातौ ।
५.४.३८ प्रज्ञादिभ्यश्च ।
५.४.३९ मृदस्तिकन् ।
५.४.४० सस्नौ प्रशंसायाम् ।
५.४.४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ।
५.४.४२ बह्वल्पार्थाच्छस् कारकादन्यतरस्याम् ।
५.४.४३ संख्यैकवचनाच्च वीप्सायाम् ।
५.४.४४ प्रतियोगे पञ्चम्यास्तसिः ।
५.४.४५ अपादाने चाहीयरुहोः ।
५.४.४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।
५.४.४७ हीयमानपापयोगाच्च ।
५.४.४८ षष्ठ्या व्याश्रये ।
५.४.४९ रोगाच्चापनयने ।
५.४.५० अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः ।
५.४.५१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।
५.४.५२ विभाषा साति कात्स्न्र्ये ।
५.४.५३ अभिविधौ सम्पदा च ।

५.४.५४ तदधीनवचने ।
५.४.५५ देये त्रा च ।
५.४.५६ देवमनुष्यपुरुषमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।
५.४.५७ अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् ।
५.४.५८ कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ।
५.४.५९ संख्यायाश्च गुणान्तायाः ।
५.४.६० समयाच्च यापनायाम् ।
५.४.६१ सपत्त्रनिष्पत्त्रादतिव्यथने ।
५.४.६२ निष्कुलान्निष्कोषणे ।
५.४.६३ सुखप्रियादानुलोम्ये ।
५.४.६४ दुःखात् प्रातिलोम्ये ।
५.४.६५ शूलात् पाके ।
५.४.६६ सत्यादशपथे ।
५.४.६७ मद्रात् परिवापणे ।
५.४.६८ समासान्ताः ।
५.४.६९ न पूजनात् ।
५.४.७० किमः क्षेपे ।
५.४.७१ नञस्तत्पुरुषात् ।
५.४.७२ पथो विभाषा ।
५.४.७३ बहुव्रीहौ संख्येये डजबहुगणात् ।
५.४.७४ ऋक्पूरप्धूःपथामानक्षे ।
५.४.७५ अच् प्रत्यन्ववपूर्वात् सामलोम्नः ।
५.४.७६ अक्ष्णोऽदर्शनात् ।
५.४.७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्साम-
वाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिव-
रत्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुष-

त्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः
।
५.४.७८ ब्रह्महस्तिभ्याम् वर्च्चसः ।
५.४.७९ अवसमन्धेभ्यस्तमसः ।
५.४.८० श्वसो वसीयःश्रेयसः ।
५.४.८१ अन्ववतप्ताद्रहसः ।
५.४.८२ प्रतेरुरसः सप्तमीस्थात् ।
५.४.८३ अनुगवमायामे ।
५.४.८४ द्विस्तावा त्रिस्तावा वेदिः ।
५.४.८५ उपसर्गादध्वनः ।
५.४.८६ तत्पुरुषस्याङ्गुलेः संख्याऽव्ययादेः ।
५.४.८७ अहस्सर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।
५.४.८८ अह्नोऽह्न एतेभ्यः ।
५.४.८९ न संख्याऽऽदेः समाहारे ।
५.४.९० उत्तमैकाभ्यां च ।
५.४.९१ राजाऽहस्सखिभ्यष्टच् ।
५.४.९२ गोरतद्धितलुकि ।
५.४.९३ अग्राख्यायामुरसः ।
५.४.९४ अनोऽश्मायस्सरसाम् जातिसंज्ञयोः ।
५.४.९५ ग्रामकौटाभ्यां च तक्ष्णः ।
५.४.९६ अतेः शुनः ।
५.४.९७ उपमानादप्राणिषु ।
५.४.९८ उत्तरमृगपूर्वाच्च सक्थ्नः ।
५.४.९९ नावो द्विगोः ।
५.४.१०० अर्धाच्च ।
५.४.१०१ खार्याः प्राचाम् ।
५.४.१०२ द्वित्रिभ्यामञ्जलेः ।
५.४.१०३ अनसन्तान्नपुंसकाच्छन्दसि ।
५.४.१०४ ब्रह्मणो जानपदाख्यायाम् ।
५.४.१०५ कुमहद्भ्यामन्यतरस्याम् ।
५.४.१०६ द्वंद्वाच्चुदषहान्तात् समाहारे ।
५.४.१०७ अव्ययीभावे शरत्प्रभृतिभ्यः ।
५.४.१०८ अनश्च ।
५.४.१०९ नपुंसकादन्यतरस्याम् ।
५.४.११० नदीपौर्णमास्याग्रहायणीभ्यः ।
५.४.१११ झयः ।
५.४.११२ गिरेश्च सेनकस्य ।
५.४.११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच् ।
५.४.११४ अङ्गुलेर्दारुणि ।
५.४.११५ द्वित्रिभ्यां ष मूर्ध्नः ।
५.४.११६ अप् पूरणीप्रमाण्योः ।
५.४.११७ अन्तर्बहिर्भ्यां च लोम्नः ।
५.४.११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।
५.४.११९ उपसर्गाच्च ।
५.४.१२० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपद-
प्रोष्ठपदाः ।
५.४.१२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ।
५.४.१२२ नित्यमसिच् प्रजामेधयोः ।
५.४.१२३ बहुप्रजाश्छन्दसि ।
५.४.१२४ धर्मादनिच् केवलात् ।
५.४.१२५ जम्भा सुहरिततृणसोमेभ्यः ।
५.४.१२६ दक्षिणेर्मा लुब्धयोगे ।
५.४.१२७ इच् कर्मव्यतिहारे ।
५.४.१२८ द्विदण्ड्यादिभ्यश्च ।
५.४.१२९ प्रसम्भ्यां जानुनोर्ज्ञुः ।
५.४.१३० ऊर्ध्वाद्विभाषा ।
५.४.१३१ ऊधसोऽनङ् ।
५.४.१३२ धनुषश्च ।
५.४.१३३ वा संज्ञायाम् ।

५.४.१३४ जायाया निङ् ।
५.४.१३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः ।
५.४.१३६ अल्पाख्यायाम् ।
५.४.१३७ उपमानाच्च ।
५.४.१३८ पादस्य लोपोऽहस्त्यादिभ्यः ।
५.४.१३९ कुम्भपदीषु च ।
५.४.१४० संख्यासुपूर्वस्य ।
५.४.१४१ वयसि दन्तस्य दतृ ।
५.४.१४२ छन्दसि च ।
५.४.१४३ स्त्रियां संज्ञायाम् ।
५.४.१४४ विभाषा श्यावारोकाभ्याम् ।
५.४.१४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।
५.४.१४६ ककुदस्यावस्थायां लोपः ।
५.४.१४७ त्रिककुत् पर्वते ।
५.४.१४८ उद्विभ्यां काकुदस्य ।
५.४.१४९ पूर्णाद्विभाषा ।
५.४.१५० सुहृद्दुर्हृदौ मित्रामित्रयोः ।
५.४.१५१ उरःप्रभृतिभ्यः कप् ।
५.४.१५२ इनः स्त्रियाम् ।
५.४.१५३ नद्यृतश्च ।
५.४.१५४ शेषाद्विभाषा ।
५.४.१५५ न संज्ञायाम् ।
५.४.१५६ ईयसश्च ।
५.४.१५७ वन्दिते भ्रातुः ।
५.४.१५८ ऋतश्छन्दसि ।
५.४.१५९ नाडीतन्त्र्योः स्वाङ्गे ।
५.४.१६० निष्प्रवाणिश्च ।

---

६.१.१ एकाचो द्वे प्रथमस्य ।
६.१.२ अजादेर्द्वितीयस्य ।
६.१.३ न न्द्राः संयोगादयः ।
६.१.४ पूर्वोऽभ्यासः ।
६.१.५ उभे अभ्यस्तम् ।
६.१.६ जक्षित्यादयः षट् ।
६.१.७ तुजादीनां दीर्घोऽभ्यासस्य ।
६.१.८ लिटि धातोरनभ्यासस्य ।
६.१.९ सन्यङोः ।
६.१.१० श्लौ ।
६.१.११ चङि ।
६.१.१२ दाश्वान् साह्वान् मीढ्वांश्च ।
६.१.१३ ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ।
६.१.१४ बन्धुनि बहुव्रीहौ ।
६.१.१५ वचिस्वपियजादिनां किति ।
६.१.१६ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छति-
भृज्जतीनां ङिति च ।
६.१.१७ लिट्यभ्यासस्योभयेषाम् ।
६.१.१८ स्वापेश्चङि ।
६.१.१९ स्वपिस्यमिव्येञां यङि ।
६.१.२० न वशः ।
६.१.२१ चायः की ।
६.१.२२ स्फायः स्फी निष्ठायाम् ।
६.१.२३ स्त्यः प्रपूर्वस्य ।
६.१.२४ द्रवमूर्तिस्पर्शयोः श्यः ।
६.१.२५ प्रतेश्च ।
६.१.२६ विभाषाऽभ्यवपूर्वस्य ।
६.१.२७ शृतं पाके ।
६.१.२८ प्यायः पी ।
६.१.२९ लिड्यङोश्च ।
६.१.३० विभाषा श्वेः ।
६.१.३१ णौ च संश्चङोः ।
६.१.३२ ह्वः सम्प्रसारणम् ।
६.१.३३ अभ्यस्तस्य च ।
६.१.३४ बहुलं छन्दसि ।
६.१.३५ चायः की ।
६.१.३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याज-
श्राताःश्रितमाशीराशीर्त्तः ।
६.१.३७ न सम्प्रसारणे सम्प्रसारणम् ।
६.१.३८ लिटि वयो यः ।
६.१.३९ वश्चास्यान्यतरस्याम् किति ।
६.१.४० वेञः ।
६.१.४१ ल्यपि च ।
६.१.४२ ज्यश्च ।
६.१.४३ व्यश्च ।
६.१.४४ विभाषा परेः ।
६.१.४५ आदेच उपदेशेऽशिति ।
६.१.४६ न व्यो लिटि ।
६.१.४७ स्फुरतिस्फुलत्योर्घञि ।
६.१.४८ क्रीङ्जीनां णौ ।
६.१.४९ सिध्यतेरपारलौकिके ।
६.१.५० मीनातिमिनोतिदीङां ल्यपि च ।
६.१.५१ विभाषा लीयतेः ।
६.१.५२ खिदेश्छन्दसि ।
६.१.५३ अपगुरो णमुलि ।
६.१.५४ चिस्फुरोर्णौ ।
६.१.५५ प्रजने वीयतेः ।
६.१.५६ बिभेतेर्हेतुभये ।
६.१.५७ नित्यं स्मयतेः ।

६.१.५८ सृजिदृशोर्झल्यमकिति ।
६.१.५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ।
६.१.६० शीर्षंश्छन्दसि ।
६.१.६१ ये च तद्धिते ।
६.१.६२ अचि शीर्षः ।
६.१.६३
पद्दन्नोमाशृन्निशसन्यूषन्दोषन्यकञ्छकनुदन्नासञ्छस्-
प्रभृतिषु ।
६.१.६४ धात्वादेः षः सः ।
६.१.६५ णो नः ।
६.१.६६ लोपो व्योर्वलि ।
६.१.६७ वेरपृक्तस्य ।
६.१.६८ हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् ।
६.१.६९ एङ्ह्रस्वात् सम्बुद्धेः ।
६.१.७० शेश्छन्दसि बहुलम् ।
६.१.७१ ह्रस्वस्य पिति कृति तुक् ।
६.१.७२ संहितायाम् ।
६.१.७३ छे च ।
६.१.७४ आङ्माङोश्च ।
६.१.७५ दीर्घात् ।
६.१.७६ पदान्ताद्वा ।
६.१.७७ इको यणचि ।
६.१.७८ एचोऽयवायावः ।
६.१.७९ वान्तो यि प्रत्यये ।
६.१.८० धातोस्तन्निमित्तस्यैव ।
६.१.८१ क्षय्यजय्यौ शक्यार्थे ।
६.१.८२ क्रय्यस्तदर्थे ।
६.१.८३ भय्यप्रवय्ये च च्छन्दसि ।
६.१.८४ एकः पूर्वपरयोः ।
६.१.८५ अन्तादिवच्च ।
६.१.८६ षत्वतुकोरसिद्धः ।
६.१.८७ आद्गुणः ।
६.१.८८ वृद्धिरेचि ।
६.१.८९ एत्येधत्यूठ्सु ।
६.१.९० आटश्च ।
६.१.९१ उपसर्गादृति धातौ ।
६.१.९२ वा सुप्यापिशलेः ।
६.१.९३ ओतोऽम्शसोः ।
६.१.९४ एङि पररूपम् ।
६.१.९५ ओमाङोश्च ।
६.१.९६ उस्यपदान्तात् ।
६.१.९७ अतो गुणे ।
६.१.९८ अव्यक्तानुकरणस्यात इतौ ।
६.१.९९ नाम्रेडितस्यान्त्यस्य तु वा ।
६.१.१०० नित्यमाम्रेडिते डाचि ।
६.१.१०१ अकः सवर्णे दीर्घः ।
६.१.१०२ प्रथमयोः पूर्वसवर्णः ।
६.१.१०३ तस्माच्छसो नः पुंसि ।
६.१.१०४ नादिचि ।
६.१.१०५ दीर्घाज्जसि च ।
६.१.१०६ वा छन्दसि ।
६.१.१०७ अमि पूर्वः ।
६.१.१०८ सम्प्रसारणाच्च ।
६.१.१०९ एङः पदान्तादति ।
६.१.११० ङसिङसोश्च ।
६.१.१११ ऋत उत् ।
६.१.११२ ख्यत्यात् परस्य ।
६.१.११३ अतो रोरप्लुतादप्लुते ।
६.१.११४ हशि च ।
६.१.११५ प्रकृत्याऽन्तःपादमव्यपरे ।
६.१.११६ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ।
६.१.११७ यजुष्युरः ।
६.१.११८ आपोजुषाणोवृष्णोवर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ।
६.१.११९ अङ्ग इत्यादौ च ।
६.१.१२० अनुदात्ते च कुधपरे ।
६.१.१२१ अवपथासि च ।
६.१.१२२ सर्वत्र विभाषा गोः ।
६.१.१२३ अवङ् स्फोटायनस्य ।
६.१.१२४ इन्द्रे च ( नित्यम्) ।
६.१.१२५ प्लुतप्रगृह्या अचि नित्यम् ।
६.१.१२६ आङोऽनुनासिकश्छन्दसि ।
६.१.१२७ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ।
६.१.१२८ ऋत्यकः ।
६.१.१२९ अप्लुतवदुपस्थिते ।
६.१.१३० ई३ चाक्रवर्मणस्य ।
६.१.१३१ दिव उत् ।
६.१.१३२ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ।
६.१.१३३ स्यश्छन्दसि बहुलम् ।
६.१.१३४ सोऽचि लोपे चेत् पादपूरणम् ।
६.१.१३५ सुट् कात् पूर्वः ।
६.१.१३६ अडभ्यासव्यवायेऽपि ।
६.१.१३७ सम्पर्युपेभ्यः करोतौ भूषणे ।
६.१.१३८ समवाये च ।
६.१.१३९ उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु ।
६.१.१४० किरतौ लवने ।
६.१.१४१ हिंसायां प्रतेश्च ।

६.१.१४२ अपाच्चतुष्पाच्छकुनिष्वालेखने ।
६.१.१४३ कुस्तुम्बुरूणि जातिः ।
६.१.१४४ अपरस्पराः क्रियासातत्ये ।
६.१.१४५ गोष्पदं सेवितासेवितप्रमाणेषु ।
६.१.१४६ आस्पदं प्रतिष्ठायाम् ।
६.१.१४७ आश्चर्यमनित्ये ।
६.१.१४८ वर्चस्केऽवस्करः ।
६.१.१४९ अपस्करो रथाङ्गम् ।
६.१.१५० विष्किरः शकुनिर्विकिरो वा ।
६.१.१५१ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ।
६.१.१५२ प्रतिष्कशश्च कशेः ।
६.१.१५३ प्रस्कण्वहरिश्चन्द्रावृषी ।
६.१.१५४ मस्करमस्करिणौ वेणुपरिव्राजकयोः ।
६.१.१५५ कास्तीराजस्तुन्दे नगरे ।
६.१.१५६ कारस्करो वृक्षः ।
६.१.१५७ पारस्करप्रभृतीनि च संज्ञायाम् ।
६.१.१५८ अनुदात्तं पदमेकवर्जम् ।
६.१.१५९ कर्षात्वतो घञोऽन्त उदात्तः ।
६.१.१६० उञ्छादीनां च ।
६.१.१६१ अनुदात्तस्य च यत्रोदात्तलोपः ।
६.१.१६२ धातोः ।
६.१.१६३ चितः ।
६.१.१६४ तद्धितस्य ।
६.१.१६५ कितः ।
६.१.१६६ तिसृभ्यो जसः ।
६.१.१६७ चतुरः शसि ।
६.१.१६८ सावेकाचस्तृतीयाऽऽदिविभक्तिः ।
६.१.१६९ अन्तोदत्तादुत्तरपदादन्यतरस्यामनित्यसमासे ।
६.१.१७० अञ्चेश्छन्दस्यसर्वनामस्थानम् ।
६.१.१७१ ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः ।
६.१.१७२ अष्टनो दीर्घात् ।
६.१.१७३ शतुरनुमो नद्यजादी ।
६.१.१७४ उदात्तयणो हल्पूर्वात् ।
६.१.१७५ नोङ्धात्वोः ।
६.१.१७६ ह्रस्वनुड्भ्यां मतुप् ।
६.१.१७७ नामन्यतरस्याम् ।
६.१.१७८ ङ्याश्छन्दसि बहुलम् ।
६.१.१७९ षट्त्रिचतुर्भ्यो हलादिः ।
६.१.१८० झल्युपोत्तमम् ।
६.१.१८१ विभाषा भाषायाम् ।
६.१.१८२ न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ।
६.१.१८३ दिवो झल् ।
६.१.१८४ नृ चान्यतरस्याम् ।
६.१.१८५ तित्स्वरितम् ।
६.१.१८६ तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकम्-
अनुदात्तमहन्विङोः ।
६.१.१८७ आदिः सिचोऽन्यतरस्याम् ।
६.१.१८८ स्वपादिर्हिंसामच्यनिटि ।
६.१.१८९ अभ्यस्तानामादिः ।
६.१.१९० अनुदात्ते च ।
६.१.१९१ सर्वस्य सुपि ।
६.१.१९२ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात् पूर्वम्
पिति ।
६.१.१९३ लिति ।
६.१.१९४ आदिर्णमुल्यन्यतरस्याम् ।
६.१.१९५ अचः कर्तृयकि ।
६.१.१९६ थलि च सेटीडन्तो वा ।
६.१.१९७ ञ्नित्यादिर्नित्यम् ।
६.१.१९८ आमन्त्रितस्य च ।
६.१.१९९ पथिमथोः सर्वनामस्थाने ।
६.१.२०० अन्तश्च तवै युगपत् ।
६.१.२०१ क्षयो निवासे ।
६.१.२०२ जयः करणम् ।
६.१.२०३ वृषादीनां च ।
६.१.२०४ संज्ञायामुपमानम् ।
६.१.२०५ निष्ठा च द्व्यजनात् ।
६.१.२०६ शुष्कधृष्टौ ।
६.१.२०७ आशितः कर्ता ।
६.१.२०८ रिक्ते विभाषा ।
६.१.२०९ जुष्टार्पिते च छन्दसि ।
६.१.२१० नित्यं मन्त्रे ।
६.१.२११ युष्मदस्मदोर्ङसि ।
६.१.२१२ ङयि च ।
६.१.२१३ यतोऽनावः ।
६.१.२१४ ईडवन्दवृशंसदुहां ण्यतः ।
६.१.२१५ विभाषा वेण्विन्धानयोः ।
६.१.२१६ त्यागरागहासकुहश्वठक्रथानाम् ।
६.१.२१७ उपोत्तमं रिति ।
६.१.२१८ चङ्यन्यतरस्याम् ।
६.१.२१९ मतोः पूर्वमात् संज्ञायां स्त्रियाम् ।
६.१.२२० अन्तोऽवत्याः ।
६.१.२२१ ईवत्याः ।
६.१.२२२ चौ ।
६.१.२२३ समासस्य ।
६.२.१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ।
६.२.२ तत्पुरुषे

तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ।
६.२.३ वर्णः वर्णेष्वनेते ।
६.२.४ गाधलवणयोः प्रमाणे ।
६.२.५ दायाद्यं दायादे ।
६.२.६ प्रतिबन्धि चिरकृच्छ्रयोः ।
६.२.७ पदेऽपदेशे ।
६.२.८ निवाते वातत्राणे ।
६.२.९ शारदेअनार्तवे ।
६.२.१० अध्वर्युकषाययोर्जातौ ।
६.२.११ सदृशप्रतिरूपयोः सादृश्ये ।
६.२.१२ द्विगौ प्रमाणे ।
६.२.१३ गन्तव्यपण्यं वाणिजे ।
६.२.१४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ।
६.२.१५ सुखप्रिययोर्हिते ।
६.२.१६ प्रीतौ च ।
६.२.१७ स्वं स्वामिनि ।
६.२.१८ पत्यावैश्वर्ये ।
६.२.१९ न भूवाक्चिद्दिधिषु ।
६.२.२० वा भुवनम् ।
६.२.२१ आशङ्काबाधनेदीयस्सु संभावने ।
६.२.२२ पूर्वे भूतपूर्वे ।
६.२.२३ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ।
६.२.२४ विस्पष्टादीनि गुणवचनेषु ।
६.२.२५ श्रज्याऽवमकन्पापवत्सु भावे कर्मधारये ।
६.२.२६ कुमारश्च ।
६.२.२७ आदिः प्रत्येनसि ।
६.२.२८ पूगेष्वन्यतरस्याम् ।
६.२.२९ इगन्तकालकपालभगालशरावेषु द्विगौ ।
६.२.३० बह्वन्यतरस्याम् ।
६.२.३१ दिष्टिवितस्त्योश्च ।
६.२.३२ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ।
६.२.३३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावयवेषु ।
६.२.३४ राजन्यबहुवचनद्वंद्वेऽन्धकवृष्णिषु ।
६.२.३५ संख्या ।
६.२.३६ आचार्योपसर्जनश्चान्तेवासी ।
६.२.३७ कार्तकौजपादयश्च ।
६.२.३८ महान् व्रीह्यपराह्णगृष्टीष्वासजाबाल-
भारभारतहैलिहिलरौरवप्रवृद्धेषु ।
६.२.३९ क्षुल्लकश्च वैश्वदेवे ।
६.२.४० उष्ट्रः सादिवाम्योः ।
६.२.४१ गौः सादसादिसारथिषु ।
६.२.४२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा-
पारेवडवातैतिलकद्रूःपण्यकम्बलो दासीभाराणां च ।
६.२.४३ चतुर्थी तदर्थे ।
६.२.४४ अर्थे ।
६.२.४५ क्ते च ।
६.२.४६ कर्मधारयेऽनिष्ठा ।
६.२.४७ अहीने द्वितीया ।
६.२.४८ तृतीया कर्मणि ।
६.२.४९ गतिरनन्तरः ।
६.२.५० तादौ च निति कृत्यतौ ।
६.२.५१ तवै चान्तश्च युगपत् ।
६.२.५२ अनिगन्तोऽञ्चतौ वप्रत्यये ।
६.२.५३ न्यधी च ।
६.२.५४ ईषदन्यतरस्याम् ।
६.२.५५ हिरण्यपरिमाणं धने ।
६.२.५६ प्रथमोऽचिरोपसम्पत्तौ ।
६.२.५७ कतरकतमौ कर्मधारये ।
६.२.५८ आर्यो ब्राह्मणकुमारयोः ।
६.२.५९ राजा च ।
६.२.६० षष्ठी प्रत्येनसि ।
६.२.६१ क्ते नित्यार्थे ।
६.२.६२ ग्रामः शिल्पिनि ।
६.२.६३ राजा च प्रशंसायाम् ।
६.२.६४ आदिरुदात्तः ।
६.२.६५ सप्तमीहारिणौ धर्म्येऽहरणे ।
६.२.६६ युक्ते च ।
६.२.६७ विभाषाऽध्यक्षे ।
६.२.६८ पापं च शिल्पिनि ।
६.२.६९ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ।
६.२.७० अङ्गानि मैरेये ।
६.२.७१ भक्ताख्यास्तदर्थेषु ।
६.२.७२ गोबिडालसिंहसैन्धवेषूपमाने ।
६.२.७३ अके जीविकाऽर्थे ।
६.२.७४ प्राचां क्रीडायाम् ।
६.२.७५ अणि नियुक्ते ।
६.२.७६ शिल्पिनि चाकृञः ।
६.२.७७ संज्ञायां च ।
६.२.७८ गोतन्तियवं पाले ।
६.२.७९ णिनि ।
६.२.८० उपमानं शब्दार्थप्रकृतावेव ।
६.२.८१ युक्तारोह्यादयश्च ।
६.२.८२ दीर्घकाशतुषभ्राष्ट्रवटं जे ।
६.२.८३ अन्त्यात् पूर्वं बह्वचः ।
६.२.८४ ग्रामेऽनिवसन्तः ।
६.२.८५ घोषादिषु ।

६.२.८६ छात्र्यादयः शालायाम् ।
६.२.८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ।
६.२.८८ मालाऽऽदीनां च ।
६.२.८९ अमहन्नवं नगरेऽनुदीचाम् ।
६.२.९० अर्मे चावर्णं द्व्यच्त्र्यच् ।
६.२.९१ न भूताधिकसंजीवमद्राश्मकज्जलम् ।
६.२.९२ अन्तः ।
६.२.९३ सर्वं गुणकार्त्स्न्ये ।
६.२.९४ संज्ञायां गिरिनिकाययोः ।
६.२.९५ कुमार्यां वयसि ।
६.२.९६ उदकेऽकेवले ।
६.२.९७ द्विगौ क्रतौ ।
६.२.९८ सभायां नपुंसके ।
६.२.९९ पुरे प्राचाम् ।
६.२.१०० अरिष्टगौडपूर्वे च ।
६.२.१०१ न हास्तिनफलकमार्देयाः ।
६.२.१०२ कुसूलकूपकुम्भशालं बिले ।
६.२.१०३ दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु ।
६.२.१०४ आचार्योपसर्जनश्चान्तेवासिनि ।
६.२.१०५ उत्तरपदवृद्धौ सर्वं च ।
६.२.१०६ बहुव्रीहौ विश्वं संज्ञयाम् ।
६.२.१०७ उदराश्वेषुषु ।
६.२.१०८ क्षेपे ।
६.२.१०९ नदी बन्धुनि ।
६.२.११० निष्ठोपसर्गपूर्वमन्यतरस्याम् ।
६.२.१११ उत्तरपदादिः ।
६.२.११२ कर्णो वर्णलक्षणात् ।
६.२.११३ संज्ञौपम्ययोश्च ।
६.२.११४ कण्ठपृष्ठग्रीवाजंघं च ।
६.२.११५ शृङ्गमवस्थायां च ।
६.२.११६ नञो जरमरमित्रमृताः ।
६.२.११७ सोर्मनसी अलोमोषसी ।
६.२.११८ क्रत्वादयश्च ।
६.२.११९ आद्युदात्तं द्व्यच् छन्दसि ।
६.२.१२० वीरवीर्यौ च ।
६.२.१२१ कूलतीरतूलमूलशालाऽक्षसममव्ययीभावे ।
६.२.१२२ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ।
६.२.१२३ तत्पुरुषे शालायां नपुंसके ।
६.२.१२४ कन्था च ।
६.२.१२५ आदिश्चिहणादीनाम् ।
६.२.१२६ चेलखेटकटुककाण्डं गर्हायाम् ।
६.२.१२७ चीरमुपमानम् ।
६.२.१२८ पललसूपशाकं मिश्रे ।
६.२.१२९ कूलसूदस्थलकर्षाः संज्ञायाम् ।
६.२.१३० अकर्मधारये राज्यम् ।
६.२.१३१ वर्ग्यादयश्च ।
६.२.१३२ पुत्रः पुंभ्यः ।
६.२.१३३ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ।
६.२.१३४ चूर्णादीन्यप्राणिषष्ठ्याः ।
६.२.१३५ षट् च काण्डादीनि ।
६.२.१३६ कुण्डं वनम् ।
६.२.१३७ प्रकृत्या भगालम् ।
६.२.१३८ शितेर्नित्याबह्वज्बहुव्रीहावभसत् ।
६.२.१३९ गतिकारकोपपदात् कृत् ।
६.२.१४० उभे वनस्पत्यादिषु युगपत् ।
६.२.१४१ देवताद्वंद्वे च ।
६.२.१४२ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ।
६.२.१४३ अन्तः ।
६.२.१४४ थाथघञ्क्ताजबित्रकाणाम् ।
६.२.१४५ सूपमानात् क्तः ।
६.२.१४६ संज्ञायामनाचितादीनाम् ।
६.२.१४७ प्रवृद्धादीनां च ।
६.२.१४८ कारकाद्दत्तश्रुतयोरेवाशिषि ।
६.२.१४९ इत्थम्भूतेन कृतमिति च ।
६.२.१५० अनो भावकर्मवचनः ।
६.२.१५१ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ।
६.२.१५२ सप्तम्याः पुण्यम् ।
६.२.१५३ ऊनार्थकलहं तृतीयायाः ।
६.२.१५४ मिश्रं चानुपसर्गमसंधौ ।
६.२.१५५ नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ।
६.२.१५६ ययतोश्चातदर्थे ।
६.२.१५७ अच्कावशक्तौ ।
६.२.१५८ आक्रोशे च ।
६.२.१५९ संज्ञायाम् ।
६.२.१६० कृत्योकेष्णुच्चार्वादयश्च ।
६.२.१६१ विभाषा तृन्नन्नतीक्ष्णशुचिषु ।
६.२.१६२ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ।
६.२.१६३ संख्यायाः स्तनः ।
६.२.१६४ विभाषा छन्दसि ।
६.२.१६५ संज्ञायां मित्राजिनयोः ।
६.२.१६६ व्यवायिनोऽन्तरम् ।
६.२.१६७ मुखं स्वाङ्गम् ।
६.२.१६८ नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ।
६.२.१६९ निष्ठोपमानादन्यतरस्याम् ।
६.२.१७० जातिकालसुखादिभ्योऽनाच्छादनात्
क्तोऽकृतमितप्रतिपन्नाः ।

६.२.१७१ वा जाते ।
६.२.१७२ नञ्सुभ्याम् ।
६.२.१७३ कपि पूर्वम् ।
६.२.१७४ ह्रस्वान्तेऽन्त्यात् पूर्वम् ।
६.२.१७५ बहोर्नञ्वदुत्तरपदभूम्नि ।
६.२.१७६ न गुणादयोऽवयवाः ।
६.२.१७७ उपसर्गात् स्वाङ्गं ध्रुवमपर्शु ।
६.२.१७८ वनं समासे ।
६.२.१७९ अन्तः ।
६.२.१८० अन्तश्च ।
६.२.१८१ न निविभ्याम् ।
६.२.१८२ परेरभितोभाविमण्डलम् ।
६.२.१८३ प्रादस्वाङ्गं संज्ञायाम् ।
६.२.१८४ निरुदकादीनि च ।
६.२.१८५ अभेर्मुखम् ।
६.२.१८६ अपाच्च ।
६.२.१८७ स्फिगपूतवीणाऽञ्जोऽध्वकुक्षिसीरनामनाम च ।
६.२.१८८ अधेरुपरिस्थम् ।
६.२.१८९ अनोरप्रधानकनीयसी ।
६.२.१९० पुरुषश्चान्वादिष्टः ।
६.२.१९१ अतेरकृत्पदे ।
६.२.१९२ नेरनिधाने ।
६.२.१९३ प्रतेरंश्वादयस्तत्पुरुषे ।
६.२.१९४ उपाद् द्व्यजजिनमगौरादयः ।
६.२.१९५ सोरवक्षेपणे ।
६.२.१९६ विभाषोत्पुच्छे ।
६.२.१९७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ।
६.२.१९८ सक्थं चाक्रान्तात् ।
६.२.१९९ परादिश्छन्दसि बहुलम् ।
६.३.१ अलुगुत्तरपदे ।
६.३.२ पञ्चम्याः स्तोकादिभ्यः ।
६.३.३ ओजःसहोऽम्भस्तमसः तृतीयायाः ।
६.३.४ मनसः संज्ञायाम् ।
६.३.५ आज्ञायिनि च ।
६.३.६ आत्मनश्च पूरणे ।
६.३.७ वैयाकरणाख्यायां चतुर्थ्याः ।
६.३.८ परस्य च ।
६.३.९ हलदन्तात् सप्तम्याः संज्ञायाम् ।
६.३.१० कारनाम्नि च प्राचां हलादौ ।
६.३.११ मध्याद्गुरौ ।
६.३.१२ अमूर्धमस्तकात् स्वाङ्गादकामे ।
६.३.१३ बन्धे च विभाषा ।
६.३.१४ तत्पुरुषे कृति बहुलम् ।
६.३.१५ प्रावृट्शरत्कालदिवां जे ।
६.३.१६ विभाषा वर्षक्षरशरवरात् ।
६.३.१७ घकालतनेषु कालनाम्नः ।
६.३.१८ शयवासवासिषु अकालात् ।
६.३.१९ नेन्सिद्धबध्नातिषु ।
६.३.२० स्थे च भाषायाम् ।
६.३.२१ षष्ठ्या आक्रोशे ।
६.३.२२ पुत्रेऽन्यतरस्याम् ।
६.३.२३ ऋतो विद्यायोनिसम्बन्धेभ्यः ।
६.३.२४ विभाषा स्वसृपत्योः ।
६.३.२५ आनङ् ऋतो द्वंद्वे ।
६.३.२६ देवताद्वंद्वे च ।
६.३.२७ ईदग्नेः सोमवरुणयोः ।
६.३.२८ इद्वृद्धौ ।
६.३.२९ दिवो द्यावा ।
६.३.३० दिवसश्च पृथिव्याम् ।
६.३.३१ उषासोषसः ।
६.३.३२ मातरपितरावुदीचाम् ।
६.३.३३ पितरामातरा च च्छन्दसि ।
६.३.३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु ।
६.३.३५ तसिलादिषु आकृत्वसुचः ।
६.३.३६ क्यङ्मानिनोश्च ।
६.३.३७ न कोपधायाः ।
६.३.३८ संज्ञापूरण्योश्च ।
६.३.३९ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ।
६.३.४० स्वाङ्गाच्चेतोऽमानिनि ।
६.३.४१ जातेश्च ।
६.३.४२ पुंवत् कर्मधारयजातीयदेशीयेषु ।
६.३.४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ।
६.३.४४ नद्याः शेषस्यान्यतरस्याम् ।
६.३.४५ उगितश्च ।
६.३.४६ आन्महतः समानाधिकरणजातीययोः ।
६.३.४७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ।
६.३.४८ त्रेस्त्रयः ।
६.३.४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ।
६.३.५० हृदयस्य हृल्लेखयदण्लासेषु ।
६.३.५१ वा शोकष्यञ्रोगेषु ।
६.३.५२ पादस्य पदाज्यातिगोपहतेषु ।
६.३.५३ पद् यत्यतदर्थे ।
६.३.५४ हिमकाषिहतिषु च ।
६.३.५५ ऋचः शे ।

६.३.५६ वा घोषमिश्रशब्देषु ।
६.३.५७ उदकस्योदः संज्ञायाम् ।
६.३.५८ पेषंवासवाहनधिषु च ।
६.३.५९ एकहलादौ पूरयितव्येऽन्यतरस्याम् ।
६.३.६० मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ।
६.३.६१ इको ह्रस्वोऽङ्यो गालवस्य ।
६.३.६२ एक तद्धिते च ।
६.३.६३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् ।
६.३.६४ त्वे च ।
६.३.६५ इष्टकेषीकामालानां चिततूलभारिषु ।
६.३.६६ खित्यनव्ययस्य ।
६.३.६७ अरुर्द्विषदजन्तस्य मुम् ।
६.३.६८ इच एकाचोऽम्प्रत्ययवच्च ।
६.३.६९ वाचंयमपुरंदरौ च ।
६.३.७० कारे सत्यागदस्य ।
६.३.७१ श्येनतिलस्य पाते ञे ।
६.३.७२ रात्रेः कृति विभाषा ।
६.३.७३ नलोपः नञः ।
६.३.७४ तस्मान्नुडचि ।
६.३.७५ नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनख-
नपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ।
६.३.७६ एकादिश्चैकस्य चादुक् ।
६.३.७७ नगोऽप्राणिष्वन्यतरस्याम् ।
६.३.७८ सहस्य सः संज्ञायाम् ।
६.३.७९ ग्रन्थान्ताधिके च ।
६.३.८० द्वितीये चानुपाख्ये ।
६.३.८१ अव्ययीभावे चाकाले ।
६.३.८२ वोपसर्जनस्य ।
६.३.८३ प्रकृत्याऽऽशिष्यगोवत्सहलेषु ।
६.३.८४ समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु ।
६.३.८५ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्ण-
वयोवचनबन्धुषु ।
६.३.८६ चरणे ब्रह्मचारिणि ।
६.३.८७ तीर्थे ये ।
६.३.८८ विभाषोदरे ।
६.३.८९ दृग्दृशवतुषु ।
६.३.९० इदङ्किमोरीश्की ।
६.३.९१ आ सर्वनाम्नः ।
६.३.९२ विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये ।
६.३.९३ समः समि ।
६.३.९४ तिरसस्तिर्यलोपे ।
६.३.९५ सहस्य सध्रिः ।
६.३.९६ सध मादस्थयोश्छन्दसि ।
६.३.९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ।
६.३.९८ ऊदनोर्देशे ।
६.३.९९ अषष्ठ्यतृतीयास्थस्यान्यस्य
दुगाशिराशाऽऽस्थाऽऽस्थितोत्सुकोतिकारकरागच्छेषु ।
६.३.१०० अर्थे विभाषा ।
६.३.१०१ कोः कत् तत्पुरुषेऽचि ।
६.३.१०२ रथवदयोश्च ।
६.३.१०३ तृणे च जातौ ।
६.३.१०४ का पथ्यक्षयोः ।
६.३.१०५ ईषदर्थे ।
६.३.१०६ विभाषा पुरुषे ।
६.३.१०७ कवं चोष्णे ।
६.३.१०८ पथि च च्छन्दसि ।
६.३.१०९ पृषोदरादीनि यथोपदिष्टम् ।
६.३.११० संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ।
६.३.१११ ढ्रलोपे पूर्वस्य दीर्घोऽणः ।
६.३.११२ सहिवहोरोदवर्णस्य ।
६.३.११३ साढ्यै साढ्वा साढेति निगमे ।
६.३.११४ संहितायाम् ।
६.३.११५ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्न-
छिन्नच्छिद्रस्रुवस्वस्तिकस्य ।
६.३.११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ।
६.३.११७ वनगिर्योः संज्ञायां कोटरकिंशुलकादीनाम् ।
६.३.११८ वले ।
६.३.११९ मतौ बह्वचोऽनजिरादीनाम् ।
६.३.१२० शरादीनां च ।
६.३.१२१ इकः वहे अपीलोः ।
६.३.१२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् ।
६.३.१२३ इकः काशे ।
६.३.१२४ दस्ति ।
६.३.१२५ अष्टनः संज्ञायाम् ।
६.३.१२६ छन्दसि च ।
६.३.१२७ चितेः कपि ।
६.३.१२८ विश्वस्य वसुराटोः ।
६.३.१२९ नरे संज्ञायाम् ।
६.३.१३० मित्रे चर्षौ ।
६.३.१३१ मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ।
६.३.१३२ ओषधेश्च विभक्तावप्रथमायाम् ।
६.३.१३३ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ।
६.३.१३४ इकः सुञि ।
६.३.१३५ द्व्यचोऽतस्तिङः ।
६.३.१३६ निपातस्य च ।
६.३.१३७ अन्येषामपि दृश्यते ।

६.३.१३८ चौ ।
६.३.१३९ सम्प्रसारणस्य ।
६.४.१ अङ्गस्य ।
६.४.२ हलः ।
६.४.३ नामि ।
६.४.४ न तिसृचतसृ ।
६.४.५ छन्दस्युभयथा ।
६.४.६ नृ च ।
६.४.७ नोपधायाः ।
६.४.८ सर्वनामस्थाने चासम्बुद्धौ ।
६.४.९ वा षपूर्वस्य निगमे ।
६.४.१० सान्तमहतः संयोगस्य ।
६.४.११
अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृ-
प्रशास्तॄणाम् ।
६.४.१२ इन्हन्पूषार्यम्णां शौ ।
६.४.१३ सौ च ।
६.४.१४ अत्वसन्तस्य चाधातोः ।
६.४.१५ अनुनासिकस्य क्विझलोः क्ङिति ।
६.४.१६ अज्झनगमां सनि ।
६.४.१७ तनोतेर्विभाषा ।
६.४.१८ क्रमश्च क्त्वि ।
६.४.१९ च्छ्वोः शूडनुनासिके च ।
६.४.२० ज्वरत्वरश्रिव्यविमवामुपधायाश्च ।
६.४.२१ राल्लोपः ।
६.४.२२ असिद्धवदत्राभात् ।
६.४.२३ श्नान्नलोपः ।
६.४.२४ अनिदितां हल उपधायाः क्ङिति ।
६.४.२५ दन्शसञ्जस्वञ्जां शपि ।
६.४.२६ रञ्जेश्च ।
६.४.२७ घञि च भावकरणयोः ।
६.४.२८ स्यदो जवे ।
६.४.२९ अवोदैधौद्मप्रश्रथहिमश्रथाः ।
६.४.३० नाञ्चेः पूजायाम् ।
६.४.३१ क्त्वि स्कन्दिस्यन्दोः ।
६.४.३२ जान्तनशां विभाषा ।
६.४.३३ भञ्जेश्च चिणि ।
६.४.३४ शास इदङ्हलोः ।
६.४.३५ शा हौ ।
६.४.३६ हन्तेर्जः ।
६.४.३७ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति
६.४.३८ वा ल्यपि ।
६.४.३९ न क्तिचि दीर्घश्च ।
६.४.४० गमः क्वौ ।
६.४.४१ विड्वनोरनुनासिकस्यात् ।
६.४.४२ जनसनखनां सञ्झलोः ।
६.४.४३ ये विभाषा ।
६.४.४४ तनोतेर्यकि ।
६.४.४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ।
६.४.४६ आर्धधातुके ।
६.४.४७ भ्रस्जो रोपधयोः रमन्यतरस्याम् ।
६.४.४८ अतो लोपः ।
६.४.४९ यस्य हलः ।
६.४.५० क्यस्य विभाषा ।
६.४.५१ णेरनिटि ।
६.४.५२ निष्ठायां सेटि ।
६.४.५३ जनिता मन्त्रे ।
६.४.५४ शमिता यज्ञे ।
६.४.५५ अयामन्ताल्वाय्येत्न्विष्णुषु ।
६.४.५६ ल्यपि लघुपूर्वात् ।
६.४.५७ विभाषाऽऽपः ।
६.४.५८ युप्लुवोर्दीर्घश्छन्दसि ।
६.४.५९ क्षियः ।
६.४.६० निष्ठायां अण्यदर्थे ।
६.४.६१ वाऽऽक्रोशदैन्ययोः ।
६.४.६२ स्यसिच्सीयुट्तासिषु भावकर्मणोर्-
उपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च ।
६.४.६३ दीङो युडचि क्ङिति ।
६.४.६४ आतो लोप इटि च ।
६.४.६५ ईद्यति ।
६.४.६६ घुमास्थागापाजहातिसां हलि ।
६.४.६७ एर्लिङि ।
६.४.६८ वाऽन्यस्य संयोगादेः ।
६.४.६९ न ल्यपि ।
६.४.७० मयतेरिदन्यतरस्याम् ।
६.४.७१ लुङ्लङ्लृङ्क्ष्वडुदात्तः ।
६.४.७२ आडजादीनाम् ।
६.४.७३ छन्दस्यपि दृश्यते ।
६.४.७४ न माङ्योगे ।
६.४.७५ बहुलं छन्दस्यमाङ्योगेऽपि ।
६.४.७६ इरयो रे ।
६.४.७७ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ ।
६.४.७८ अभ्यासस्यासवर्णे ।
६.४.७९ स्त्रियाः ।
६.४.८० वाऽम्शसोः ।
६.४.८१ इणो यण् ।

६.४.८२ एरनेकाचोऽसंयोगपूर्वस्य ।
६.४.८३ ओः सुपि ।
६.४.८४ वर्षाभ्वश्च ।
६.४.८५ न भूसुधियोः ।
६.४.८६ छन्दस्युभयथा ।
६.४.८७ हुश्नुवोः सार्वधातुके ।
६.४.८८ भुवो वुग्लुङ्लिटोः ।
६.४.८९ ऊदुपधाया गोहः ।
६.४.९० दोषो णौ ।
६.४.९१ वा चित्तविरागे ।
६.४.९२ मितां ह्रस्वः ।
६.४.९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् ।
६.४.९४ खचि ह्रस्वः ।
६.४.९५ ह्लादो निष्ठायाम् ।
६.४.९६ छादेर्घेऽद्व्युपसर्गस्य ।
६.४.९७ इस्मन्त्रन्क्विषु च ।
६.४.९८ गमहनजनखनघसां लोपः क्ङित्यनङि ।
६.४.९९ तनिपत्योश्छन्दसि ।
६.४.१०० घसिभसोर्हलि च ।
६.४.१०१ हुझल्भ्यो हेर्धिः ।
६.४.१०२ श्रुशृणुपॄकृवृभ्यश्छन्दसि ।
६.४.१०३ अङितश्च ।
६.४.१०४ चिणो लुक् ।
६.४.१०५ अतो हेः ।
६.४.१०६ उतश्च प्रत्ययादसंयोगपूर्वात् ।
६.४.१०७ लोपश्चास्यान्यतरस्यां म्वोः ।
६.४.१०८ नित्यं करोतेः ।
६.४.१०९ ये च ।
६.४.११० अत उत् सार्वधातुके ।
६.४.१११ श्नसोरल्लोपः ।
६.४.११२ श्नाऽभ्यस्तयोरातः ।
६.४.११३ ई हल्यघोः ।
६.४.११४ इद्दरिद्रस्य ।
६.४.११५ भियोऽन्यतरस्याम् ।
६.४.११६ जहातेश्च ।
६.४.११७ आ च हौ ।
६.४.११८ लोपो यि ।
६.४.११९ घ्वसोरेद्धावभ्यासलोपश्च ।
६.४.१२० अत एकहल्मध्येऽनादेशादेर्लिटि ।
६.४.१२१ थलि च सेटि ।
६.४.१२२ तॄफलभजत्रपश्च ।
६.४.१२३ राधो हिंसायाम् ।
६.४.१२४ वा जॄभ्रमुत्रसाम् ।
६.४.१२५ फणां च सप्तानाम् ।
६.४.१२६ न शसददवादिगुणानाम् ।
६.४.१२७ अर्वणस्त्रसावनञः ।
६.४.१२८ मघवा बहुलम् ।
६.४.१२९ भस्य ।
६.४.१३० पादः पत् ।
६.४.१३१ वसोः सम्प्रसारणम् ।
६.४.१३२ वाह ऊठ् ।
६.४.१३३ श्वयुवमघोनामतद्धिते ।
६.४.१३४ अल्लोपोऽनः ।
६.४.१३५ षपूर्वहन्धृतराज्ञामणि ।
६.४.१३६ विभाषा ङिश्योः ।
६.४.१३७ न संयोगाद्वमान्तात् ।
६.४.१३८ अचः ।
६.४.१३९ उद ईत् ।
६.४.१४० आतो धातोः ।
६.४.१४१ मन्त्रेष्वाङ्यादेरात्मनः ।
६.४.१४२ ति विंशतेर्डिति ।
६.४.१४३ टेः ।
६.४.१४४ नस्तद्धिते ।
६.४.१४५ अह्नष्टखोरेव ।
६.४.१४६ ओर्गुणः ।
६.४.१४७ ढे लोपोऽकद्र्वाः ।
६.४.१४८ यस्येति च ।
६.४.१४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ।
६.४.१५० हलस्तद्धितस्य ।
६.४.१५१ आपत्यस्य च तद्धितेऽनाति ।
६.४.१५२ क्यच्व्योश्च ।
६.४.१५३ बिल्वकादिभ्यश्छस्य लुक् ।
६.४.१५४ तुरिष्ठेमेयस्सु ।
६.४.१५५ टेः ।
६.४.१५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः ।
६.४.१५७ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घ-वृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।
६.४.१५८ बहोर्लोपो भू च बहोः ।
६.४.१५९ इष्ठस्य यिट् च ।
६.४.१६० ज्यादादीयसः ।
६.४.१६१ र ऋतो हलादेर्लघोः ।
६.४.१६२ विभाषर्जोश्छन्दसि ।
६.४.१६३ प्रकृत्यैकाच् ।
६.४.१६४ इनण्यनपत्ये ।
६.४.१६५ गाथिविदथिकेशिगणिपणिनश्च ।

६.४.१६६ संयोगादिश्च ।
६.४.१६७ अन् ।
६.४.१६८ ये चाभावकर्मणोः ।
६.४.१६९ आत्माध्वानौ खे ।
६.४.१७० न मपूर्वोऽपत्येऽवर्मणः ।
६.४.१७१ ब्राह्मोऽजातौ ।
६.४.१७२ कार्मस्ताच्छील्ये ।
६.४.१७३ औक्षमनपत्ये ।
६.४.१७४ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेय-वाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ।
६.४.१७५ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ।

---

७.१.१ युवोरनाकौ ।
७.१.२ आयनेयीनीयियः फढखच्छघां प्रत्ययादीनाम् ।
७.१.३ झोऽन्तः ।
७.१.४ अदभ्यस्तात् ।
७.१.५ आत्मनेपदेष्वनतः ।
७.१.६ शीङो रुट् ।
७.१.७ वेत्तेर्विभाषा ।
७.१.८ बहुलं छन्दसि ।
७.१.९ अतो भिस ऐस् ।
७.१.१० बहुलं छन्दसि ।
७.१.११ नेदमदसोरकोः ।
७.१.१२ टाङसिङसामिनात्स्याः ।
७.१.१३ ङेर्यः ।
७.१.१४ सर्वनाम्नः स्मै ।
७.१.१५ ङसिङ्योः स्मात्स्मिनौ ।
७.१.१६ पूर्वादिभ्यो नवभ्यो वा ।
७.१.१७ जसः शी ।
७.१.१८ औङ आपः ।
७.१.१९ नपुंसकाच्च ।
७.१.२० जश्शसोः शिः ।
७.१.२१ अष्टाभ्य औश् ।
७.१.२२ षड्भ्यो लुक् ।
७.१.२३ स्वमोर्नपुंसकात् ।
७.१.२४ अतोऽम् ।
७.१.२५ अद्ड् डतरादिभ्यः पञ्चभ्यः ।
७.१.२६ नेतराच्छन्दसि ।
७.१.२७ युष्मदस्मद्भ्यां ङसोऽश् ।
७.१.२८ ङे प्रथमयोरम् ।
७.१.२९ शसो न ।
७.१.३० भ्यसः भ्यम् ।
७.१.३१ पञ्चम्या अत् ।
७.१.३२ एकवचनस्य च ।
७.१.३३ साम आकम् ।
७.१.३४ आत औ णलः ।
७.१.३५ तुह्योस्तातङाशिष्यन्यतरस्याम् ।
७.१.३६ विदेः शतुर्वसुः ।
७.१.३७ समासेऽनञ्पूर्वे क्त्वो ल्यप् ।
७.१.३८ क्त्वाऽपि छन्दसि ।
७.१.३९ सुपां सुलुक्पूर्वसवर्णाऽऽच्छेयाडाड्यायाजालः ।
७.१.४० अमो मश् ।
७.१.४१ लोपस्त आत्मनेपदेषु ।
७.१.४२ ध्वमो ध्वात् ।
७.१.४३ यजध्वैनमिति च ।
७.१.४४ तस्य तात् ।
७.१.४५ तप्तनप्तनथनाश्च ।
७.१.४६ इदन्तो मसि ।
७.१.४७ क्त्वो यक् ।
७.१.४८ इष्ट्वीनमिति च ।
७.१.४९ स्नात्व्यादयश्च ।
७.१.५० आज्जसेरसुक् ।
७.१.५१ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ।
७.१.५२ आमि सर्वनाम्नः सुट् ।
७.१.५३ त्रेस्त्रयः ।
७.१.५४ ह्रस्वनद्यापो नुट् ।
७.१.५५ षट्चतुर्भ्यश्च ।
७.१.५६ श्रीग्रामण्योश्छन्दसि ।
७.१.५७ गोः पादान्ते ।
७.१.५८ इदितो नुम् धातोः ।
७.१.५९ शे मुचादीनाम् ।
७.१.६० मस्जिनशोर्झलि ।
७.१.६१ रधिजभोरचि ।
७.१.६२ नेट्यलिटि रधेः ।
७.१.६३ रभेरशब्लिटोः ।
७.१.६४ लभेश्च ।
७.१.६५ आङो यि ।
७.१.६६ उपात् प्रशंसायाम् ।
७.१.६७ उपसर्गात् खल्घञोः ।
७.१.६८ न सुदुर्भ्यां केवलाभ्याम् ।
७.१.६९ विभाषा चिण्णमुलोः ।
७.१.७० उगिदचां सर्वनामस्थानेऽधातोः ।
७.१.७१ युजेरसमासे ।
७.१.७२ नपुंसकस्य झलचः ।
७.१.७३ इकोऽचि विभक्तौ ।
७.१.७४ तृतीयाऽऽदिषु भाषितपुंस्कं पुंवद्गालवस्य ।

७.१.७५ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ।
७.१.७६ छन्दस्यपि दृश्यते ।
७.१.७७ ई च द्विवचने ।
७.१.७८ नाभ्यस्ताच्छतुः ।
७.१.७९ वा नपुंसकस्य ।
७.१.८० आच्छीनद्योर्नुम् ।
७.१.८१ शप्श्यनोर्नित्यम् ।
७.१.८२ सावनडुहः ।
७.१.८३ दृक्स्ववस्स्वतवसां छन्दसि ।
७.१.८४ दिव औत् ।
७.१.८५ पथिमथ्यृभुक्षामात् ।
७.१.८६ इतोऽत् सर्वनामस्थाने ।
७.१.८७ थो न्थः ।
७.१.८८ भस्य टेर्लोपः ।
७.१.८९ पुंसोऽसुङ् ।
७.१.९० गोतो णित् ।
७.१.९१ णलुत्तमो वा ।
७.१.९२ सख्युरसम्बुद्धौ ।
७.१.९३ अनङ् सौ ।
७.१.९४ ऋदुशनस्पुरुदंशोऽनेहसां च ।
७.१.९५ तृज्वत् क्रोष्टुः ।
७.१.९६ स्त्रियां च ।
७.१.९७ विभाषा तृतीयाऽऽदिष्वचि ।
७.१.९८ चतुरनडुहोरामुदात्तः ।
७.१.९९ अम् सम्बुद्धौ ।
७.१.१०० ॠत इद्धातोः ।
७.१.१०१ उपधायाश्च ।
७.१.१०२ उदोष्ठ्यपूर्वस्य ।
७.१.१०३ बहुलं छन्दसि ।
७.२.१ सिचि वृद्धिः परस्मैपदेषु ।
७.२.२ अतो र्लान्तस्य ।
७.२.३ वदव्रजहलन्तस्याचः ।
७.२.४ नेटि ।
७.२.५ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ।
७.२.६ ऊर्णोतेर्विभाषा ।
७.२.७ अतो हलादेर्लघोः ।
७.२.८ नेड् वशि कृति ।
७.२.९ तितुत्रतथसिसुसरकसेषु च ।
७.२.१० एकाच उपदेशेऽनुदात्तात् ।
७.२.११ श्र्युकः किति ।
७.२.१२ सनि ग्रहगुहोश्च ।
७.२.१३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ।
७.२.१४ श्वीदितो निष्ठायाम् ।
७.२.१५ यस्य विभाषा ।
७.२.१६ आदितश्च ।
७.२.१७ विभाषा भावादिकर्मणोः ।
७.२.१८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ।
७.२.१९ धृषिशसी वैयात्ये ।
७.२.२० दृढः स्थूलबलयोः ।
७.२.२१ प्रभौ परिवृढः ।
७.२.२२ कृच्छ्रगहनयोः कषः ।
७.२.२३ घुषिरविशब्दने ।
७.२.२४ अर्देः संनिविभ्यः ।
७.२.२५ अभेश्चाविदूर्ये ।
७.२.२६ णेरध्ययने वृत्तम् ।
७.२.२७ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ।
७.२.२८ रुष्यमत्वरसंघुषास्वनाम् ।
७.२.२९ हृषेर्लोमसु ।
७.२.३० अपचितश्च ।
७.२.३१ ह्रु ह्वरेश्छन्दसि ।
७.२.३२ अपरिह्वृताश्च ।
७.२.३३ सोमे ह्वरितः ।
७.२.३४ ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्तविशस्तृ-शंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरुत्रीरुज्ज्वलितिक्षरिति-क्षमितिवमित्यमितीति च ।
७.२.३५ आर्धधातुकस्येड् वलादेः ।
७.२.३६ स्नुक्रमोरनात्मनेपदनिमित्ते ।
७.२.३७ ग्रहोऽलिटि दीर्घः ।
७.२.३८ वॄतो वा ।
७.२.३९ न लिङि ।
७.२.४० सिचि च परस्मैपदेषु ।
७.२.४१ इट् सनि वा ।
७.२.४२ लिङ्सिचोरात्मनेपदेषु ।
७.२.४३ ऋतश्च संयोगादेः ।
७.२.४४ स्वरतिसूतिसूयतिधूञूदितो वा ।
७.२.४५ रधादिभ्यश्च ।
७.२.४६ निरः कुषः ।
७.२.४७ इण्निष्ठायाम् ।
७.२.४८ तीषसहलुभरुषरिषः ।
७.२.४९ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ।
७.२.५० क्लिशः क्त्वानिष्ठयोः ।
७.२.५१ पूङश्च ।
७.२.५२ वसतिक्षुधोरिट् ।
७.२.५३ अञ्चेः पूजायाम् ।
७.२.५४ लुभो विमोचने ।

७.२.५५ जृव्रश्च्योः क्त्वि ।
७.२.५६ उदितो वा ।
७.२.५७ सेऽसिचि कृतचृतच्छृदतृदनृतः ।
७.२.५८ गमेरिट् परस्मैपदेषु ।
७.२.५९ न वृद्भ्यश्चतुर्भ्यः ।
७.२.६० तासि च क्लृपः ।
७.२.६१ अचस्तास्वत् थल्यनिटो नित्यम् ।
७.२.६२ उपदेशेऽत्वतः ।
७.२.६३ ऋतो भारद्वाजस्य ।
७.२.६४ बभूथाततन्थजगृम्भववर्थेति निगमे ।
७.२.६५ विभाषा सृजिदृषोः ।
७.२.६६ इडत्त्यर्तिव्ययतीनाम् ।
७.२.६७ वस्वेकाजाद्घसाम् ।
७.२.६८ विभाषा गमहनविदविशाम् ।
७.२.६९ सनिंससनिवांसम् ।
७.२.७० ऋद्धनोः स्ये ।
७.२.७१ अञ्जेः सिचि ।
७.२.७२ स्तुसुधूञ्भ्यः परस्मैपदेषु ।
७.२.७३ यमरमनमातां सक् च ।
७.२.७४ स्मिपूङ्रञ्ज्वशां सनि ।
७.२.७५ किरश्च पञ्चभ्यः ।
७.२.७६ रुदादिभ्यः सार्वधतुके ।
७.२.७७ ईशः से ।
७.२.७८ ईडजनोर्ध्वे च ।
७.२.७९ लिङः सलोपोऽनन्त्यस्य ।
७.२.८० अतो येयः ।
७.२.८१ आतो ङितः ।
७.२.८२ आने मुक् ।
७.२.८३ ईदासः ।
७.२.८४ अष्टन आ विभक्तौ ।
७.२.८५ रायो हलि ।
७.२.८६ युष्मदस्मदोरनादेशे ।
७.२.८७ द्वितीयायां च ।
७.२.८८ प्रथमायाश्च द्विवचने भाषायाम् ।
७.२.८९ योऽचि ।
७.२.९० शेषे लोपः ।
७.२.९१ मपर्यन्तस्य ।
७.२.९२ युवावौ द्विवचने ।
७.२.९३ यूयवयौ जसि ।
७.२.९४ त्वाहौ सौ ।
७.२.९५ तुभ्यमह्यौ ङयि ।
७.२.९६ तवममौ ङसि ।
७.२.९७ त्वमावेकवचने ।
७.२.९८ प्रतयोत्तरपदयोश्च ।
७.२.९९ त्रिचतुरोः स्त्रियां तिसृचतसृ ।
७.२.१०० अचि र ऋतः ।
७.२.१०१ जराया जरसन्यतरस्याम् ।
७.२.१०२ त्यदादीनामः ।
७.२.१०३ किमः कः ।
७.२.१०४ कु तिहोः ।
७.२.१०५ क्वाति ।
७.२.१०६ तदोः सः सावनन्त्ययोः ।
७.२.१०७ अदस औ सुलोपश्च ।
७.२.१०८ इदमो मः ।
७.२.१०९ दश्च ।
७.२.११० यः सौ ।
७.२.१११ इदोऽय् पुंसि ।
७.२.११२ अनाप्यकः ।
७.२.११३ हलि लोपः ।
७.२.११४ मृजेर्वृद्धिः ।
७.२.११५ अचो ञ्णिति ।
७.२.११६ अत उपधायाः ।
७.२.११७ तद्धितेष्वचामादेः ।
७.२.११८ किति च ।
७.३.१ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ।
७.३.२ केकयमित्त्रयुप्रलयानां यादेरियः ।
७.३.३ न य्वाभ्यां पदान्ताभ्याम् पूर्वौ तु ताभ्यामैच् ।
७.३.४ द्वारादीनां च ।
७.३.५ न्यग्रोधस्य च केवलस्य ।
७.३.६ न कर्मव्यतिहारे ।
७.३.७ स्वागतादीनां च ।
७.३.८ श्वादेरिञि ।
७.३.९ पदान्तस्यान्यतरस्याम् ।
७.३.१० उत्तरपदस्य ।
७.३.११ अवयवादृतोः ।
७.३.१२ सुसर्वार्धाज्जनपदस्य ।
७.३.१३ दिशोऽमद्राणाम् ।
७.३.१४ प्राचां ग्रामनगराणाम् ।
७.३.१५ संख्यायाः संवत्सरसंख्यस्य च ।
७.३.१६ वर्षस्याभविष्यति ।
७.३.१७ परिमाणान्तस्यासंज्ञाशाणयोः ।
७.३.१८ जे प्रोष्ठपदानाम् ।
७.३.१९ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ।
७.३.२० अनुशतिकादीनां च ।
७.३.२१ देवताद्वंद्वे च ।
७.३.२२ नेन्द्रस्य परस्य ।

७.३.२३ दीर्घाच्च वरुणस्य ।
७.३.२४ प्राचां नगरान्ते ।
७.३.२५ जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ।
७.३.२६ अर्धात् परिमाणस्य पूर्वस्य तु वा ।
७.३.२७ नातः परस्य ।
७.३.२८ प्रवाहणस्य ढे ।
७.३.२९ तत्प्रत्ययस्य च ।
७.३.३० नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ।
७.३.३१ यथातथयथापुरयोः पर्यायेण ।
७.३.३२ हनस्तोऽचिण्णलोः ।
७.३.३३ आतो युक् चिण्कृतोः ।
७.३.३४ नोदात्तोपदेशस्य मान्तस्यानाचमेः ।
७.३.३५ जनिवध्योश्च ।
७.३.३६ अर्त्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ।
७.३.३७ शाच्छासाह्वाव्यावेपां युक् ।
७.३.३८ वो विधूनने जुक् ।
७.३.३९ लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ।
७.३.४० भियो हेतुभये षुक् ।
७.३.४१ स्फायो वः ।
७.३.४२ शदेरगतौ तः ।
७.३.४३ रुहः पोऽन्यतरस्याम् ।
७.३.४४ प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः ।
७.३.४५ न यासयोः ।
७.३.४६ उदीचामातः स्थाने यकपूर्वायाः ।
७.३.४७ भस्त्रैषाऽजाज्ञाद्वास्वानञ्पूर्वाणामपि ।
७.३.४८ अभाषितपुंस्काच्च ।
७.३.४९ आदाचार्याणाम् ।
७.३.५० ठस्येकः ।
७.३.५१ इसुसुक्तान्तात् कः ।
७.३.५२ चजोः कु घिण्ण्यतोः ।
७.३.५३ न्यङ्क्वादीनां च ।
७.३.५४ हो हन्तेर्ञ्णिन्नेषु ।
७.३.५५ अभ्यासाच्च ।
७.३.५६ हेरचङि ।
७.३.५७ सन्लिटोर्जेः ।
७.३.५८ विभाषा चेः ।
७.३.५९ न क्वादेः ।
७.३.६० अजिवृज्योश्च ।
७.३.६१ भुजन्युब्जौ पाण्युपतापयोः ।
७.३.६२ प्रयाजानुयाजौ यज्ञाङ्गे ।
७.३.६३ वञ्चेर्गतौ ।
७.३.६४ ओक उचः के ।
७.३.६५ ण्य आवश्यके ।
७.३.६६ यजयाचरुचप्रवचर्चश्च ।
७.३.६७ वचोऽशब्दसंज्ञायाम् ।
७.३.६८ प्रयोज्यनियोज्यौ शक्यार्थे ।
७.३.६९ भोज्यं भक्ष्ये ।
७.३.७० घोर्लोपो लेटि वा ।
७.३.७१ ओतः श्यनि ।
७.३.७२ क्सस्याचि ।
७.३.७३ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ।
७.३.७४ शमामष्टानां दीर्घः श्यनि ।
७.३.७५ ष्ठिवुक्लम्याचमां शिति ।
७.३.७६ क्रमः परस्मैपदेषु ।
७.३.७७ इषुगमियमां छः ।
७.३.७८ पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ।
७.३.७९ ज्ञाजनोर्जा ।
७.३.८० प्वादीनां ह्रस्वः ।
७.३.८१ मीनातेर्निगमे ।
७.३.८२ मिदेर्गुणः ।
७.३.८३ जुसि च ।
७.३.८४ सार्वधातुकार्धधातुकयोः ।
७.३.८५ जाग्रोऽविचिण्णल्ङित्सु ।
७.३.८६ पुगन्तलघूपधस्य च ।
७.३.८७ नाभ्यस्तस्याचि पिति सार्वधातुके ।
७.३.८८ भूसुवोस्तिङि ।
७.३.८९ उतो वृद्धिर्लुकि हलि ।
७.३.९० ऊर्णोतेर्विभाषा ।
७.३.९१ गुणोऽपृक्ते ।
७.३.९२ तृणह इम् ।
७.३.९३ ब्रुव ईट् ।
७.३.९४ यङो वा ।
७.३.९५ तुरुस्तुशम्यमः सार्वधातुके ।
७.३.९६ अस्तिसिचोऽपृक्ते ।
७.३.९७ बहुलं छन्दसि ।
७.३.९८ रुदश्च पञ्चभ्यः ।
७.३.९९ अड्गार्ग्यगालवयोः ।
७.३.१०० अदः सर्वेषाम् ।
७.३.१०१ अतो दीर्घो यञि ।
७.३.१०२ सुपि च ।
७.३.१०३ बहुवचने झल्येत् ।
७.३.१०४ ओसि च ।
७.३.१०५ आङि चापः ।
७.३.१०६ सम्बुद्धौ च ।
७.३.१०७ अम्बाऽर्थनद्योर्ह्रस्वः ।

७.३.१०८ ह्रस्वस्य गुणः ।
७.३.१०९ जसि च ।
७.३.११० ऋतो ङिसर्वनामस्थानयोः ।
७.३.१११ घेर्ङिति ।
७.३.११२ आण्नद्याः ।
७.३.११३ याडापः ।
७.३.११४ सर्वनाम्नः स्याड्ढ्रस्वश्च ।
७.३.११५ विभाषा द्वितीयातृतीयाभ्याम् ।
७.३.११६ ङेराम्नद्याम्नीभ्यः ।
७.३.११७ इदुद्भ्याम् ।
७.३.११८ औत् ।
७.३.११९ अच्च घेः ।
७.३.१२० आङो नाऽस्त्रियाम् ।
७.४.१ णौ चङ्युपधाया ह्रस्वः ।
७.४.२ नाग्लोपिशास्वृदिताम् ।
७.४.३ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ।
७.४.४ लोपः पिबतेरीच्चाभ्यासस्य ।
७.४.५ तिष्ठतेरित् ।
७.४.६ जिघ्रतेर्वा ।
७.४.७ उर्ऋत् ।
७.४.८ नित्यं छन्दसि ।
७.४.९ दयतेर्दिगि लिटि ।
७.४.१० ऋतश्च संयोगादेर्गुणः ।
७.४.११ ऋच्छत्यॄताम् ।
७.४.१२ शॄदॄप्रां ह्रस्वो वा ।
७.४.१३ केऽणः ।
७.४.१४ न कपि ।
७.४.१५ आपोऽन्यतरस्याम् ।
७.४.१६ ऋदृशोऽङि गुणः ।
७.४.१७ अस्यतेस्थुक् ।
७.४.१८ श्वयतेरः ।
७.४.१९ पतः पुम् ।
७.४.२० वच उम् ।
७.४.२१ शीङः सार्वधातुके गुणः ।
७.४.२२ अयङ् यि क्ङिति ।
७.४.२३ उपसर्गाद्ध्रस्व ऊहतेः ।
७.४.२४ एतेर्लिङि ।
७.४.२५ अकृत्सार्वधातुकयोर्दीर्घः ।
७.४.२६ च्वौ च ।
७.४.२७ रीङ् ऋतः ।
७.४.२८ रिङ् शयग्लिङ्क्षु ।
७.४.२९ गुणोऽर्तिसंयोगाद्योः ।
७.४.३० यङि च ।
७.४.३१ ई घ्राध्मोः ।
७.४.३२ अस्य च्वौ ।
७.४.३३ क्यचि च ।
७.४.३४ अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु ।
७.४.३५ न च्छन्दस्यपुत्रस्य ।
७.४.३६ दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ।
७.४.३७ अश्वाघस्यात् ।
७.४.३८ देवसुम्नयोर्यजुषि काठके ।
७.४.३९ कव्यध्वरपृतनस्यर्चि लोपः ।
७.४.४० द्यतिस्यतिमास्थामित्ति किति ।
७.४.४१ शाच्छोरन्यतरस्याम् ।
७.४.४२ दधातेर्हिः ।
७.४.४३ जहातेश्च क्त्वि ।
७.४.४४ विभाषा छन्दसि ।
७.४.४५ सुधितवसुधितनेमधितधिष्वधिषीय च ।
७.४.४६ दो दद् घोः ।
७.४.४७ अच उपसर्गात्तः ।
७.४.४८ अपो भि ।
७.४.४९ सः स्यार्द्धधातुके ।
७.४.५० तासस्त्योर्लोपः ।
७.४.५१ रि च ।
७.४.५२ ह एति ।
७.४.५३ यीवर्णयोर्दीधीवेव्योः ।
७.४.५४ सनि मीमाघुरभलभशकपतपदामच इस् ।
७.४.५५ आप्ज्ञप्यृधामीत् ।
७.४.५६ दम्भ इच्च ।
७.४.५७ मुचोऽकर्मकस्य गुणो वा ।
७.४.५८ अत्र लोपोऽभ्यासस्य ।
७.४.५९ ह्रस्वः ।
७.४.६० हलादिः शेषः ।
७.४.६१ शर्पूर्वाः खयः ।
७.४.६२ कुहोश्चुः ।
७.४.६३ न कवतेर्यङि ।
७.४.६४ कृषेश्छन्दसि ।
७.४.६५
दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्-
संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्-
तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ।
७.४.६६ उरत् ।
७.४.६७ द्युतिस्वाप्योः सम्प्रसारणम् ।
७.४.६८ व्यथो लिटि ।
७.४.६९ दीर्घ इणः किति ।
७.४.७० अतः आदेः ।

७.४.७१ तस्मान्नुड् द्विहलः ।
७.४.७२ अश्नोतेश्च ।
७.४.७३ भवतेरः ।
७.४.७४ ससूवेति निगमे ।
७.४.७५ निजां त्रयाणां गुणः श्लौ ।
७.४.७६ भृञामित् ।
७.४.७७ अर्तिपिपर्त्योश्च ।
७.४.७८ बहुलं छन्दसि ।
७.४.७९ सन्यतः ।
७.४.८० ओः पुयण्ज्यपरे ।
७.४.८१ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ।
७.४.८२ गुणो यङ्लुकोः ।
७.४.८३ दीर्घोऽकितः ।
७.४.८४ नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ।
७.४.८५ नुगतोऽनुनासिकान्तस्य ।
७.४.८६ जपजभदहदशभञ्जपशां च ।
७.४.८७ चरफलोश्च ।
७.४.८८ उत् परस्यातः ।
७.४.८९ ति च ।
७.४.९० रीगृदुपधस्य च ।
७.४.९१ रुग्रिकौ च लुकि ।
७.४.९२ ऋतश्च ।
७.४.९३ सन्वल्लघुनि चङ्परेऽनग्लोपे ।
७.४.९४ दीर्घो लघोः ।
७.४.९५ अत् स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ।
७.४.९६ विभाषा वेष्टिचेष्ट्योः ।
७.४.९७ ई च गणः ।

---

८.१.१ सर्वस्य द्वे ।
८.१.२ तस्य परमाम्रेडितम् ।
८.१.३ अनुदात्तं च ।
८.१.४ नित्यवीप्सयोः ।
८.१.५ परेर्वर्जने ।
८.१.६ प्रसमुपोदः पादपूरणे ।
८.१.७ उपर्यध्यधसः सामीप्ये ।
८.१.८ वाक्यादेरामन्त्रितस्यासूयासम्मतिकोपकुत्सनभर्त्सनेषु ।
८.१.९ एकं बहुव्रीहिवत् ।
८.१.१० आबाधे च ।
८.१.११ कर्मधारयवत् उत्तरेषु ।
८.१.१२ प्रकारे गुणवचनस्य ।
८.१.१३ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् ।
८.१.१४ यथास्वे यथायथम् ।
८.१.१५ द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमण-
यज्ञपात्रप्रयोगाभिव्यक्तिषु ।
८.१.१६ पदस्य ।
८.१.१७ पदात् ।
८.१.१८ अनुदात्तं सर्वमपादादौ ।
८.१.१९ आमन्त्रितस्य च ।
८.१.२० युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ ।
८.१.२१ बहुवचने वस्नसौ ।
८.१.२२ तेमयावेकवचनस्य ।
८.१.२३ त्वामौ द्वितीयायाः ।
८.१.२४ न चवाहाहैवयुक्ते ।
८.१.२५ पश्यार्थैश्चानालोचने ।
८.१.२६ सपूर्वायाः प्रथमाया विभाषा ।
८.१.२७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ।
८.१.२८ तिङ्ङतिङः ।
८.१.२९ न लुट् ।
८.१.३० निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चणकच्चिद्यत्रयुक्तम् ।
८.१.३१ नह प्रत्यारम्भे ।
८.१.३२ सत्यं प्रश्ने ।
८.१.३३ अङ्गाप्रातिलोम्ये ।
८.१.३४ हि च ।
८.१.३५ छन्दस्यनेकमपि साकाङ्क्षम् ।
८.१.३६ यावद्यथाभ्याम् ।
८.१.३७ पूजायां नानन्तरम् ।
८.१.३८ उपसर्गव्यपेतं च ।
८.१.३९ तुपश्यपश्यताहैः पूजायाम् ।
८.१.४० अहो च ।
८.१.४१ शेषे विभाषा ।
८.१.४२ पुरा च परीप्सायाम् ।
८.१.४३ नन्वित्यनुज्ञैषणायाम् ।
८.१.४४ किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ।
८.१.४५ लोपे विभाषा ।
८.१.४६ एहिमन्ये प्रहासे लृट् ।
८.१.४७ जात्वपूर्वम् ।
८.१.४८ किम्वृत्तं च चिदुत्तरम् ।
८.१.४९ आहो उताहो चानन्तरम् ।
८.१.५० शेषे विभाषा ।
८.१.५१ गत्यर्थलोटा लृण्न चेत् कारकं सर्वान्यत् ।
८.१.५२ लोट् च ।
८.१.५३ विभाषितं सोपसर्गमनुत्तमम् ।
८.१.५४ हन्त च ।
८.१.५५ आम एकान्तरमामन्त्रितमनन्तिके ।
८.१.५६ यद्धितुपरं छन्दसि ।
८.१.५७ चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ।
८.१.५८ चादिषु च ।

८.१.५९ चवायोगे प्रथमा ।
८.१.६० हेति क्षियायाम् ।
८.१.६१ अहेति विनियोगे च ।
८.१.६२ चाहलोप एवेत्यवधारणम् ।
८.१.६३ चादिलोपे विभाषा ।
८.१.६४ वैवावेति च च्छन्दसि ।
८.१.६५ एकान्याभ्यां समर्थाभ्याम् ।
८.१.६६ यद्वृत्तान्नित्यं ।
८.१.६७ पूजनात् पूजितमनुदात्तम् ( काष्ठादिभ्यः) ।
८.१.६८ सगतिरपि तिङ् ।
८.१.६९ कुत्सने च सुप्यगोत्रादौ ।
८.१.७० गतिर्गतौ ।
८.१.७१ तिङि चोदात्तवति ।
८.१.७२ आमन्त्रितं पूर्वम् अविद्यमानवत् ।
८.१.७३ नामन्त्रिते समानाधिकरणे ( सामान्यवचनम्) ।
८.१.७४ ( सामान्यवचनं) विभाषितं विशेषवचने ( बहुवचनम्) ।
८.२.१ पूर्वत्रासिद्धम् ।
८.२.२ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ।
८.२.३ न मु ने ।
८.२.४ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ।
८.२.५ एकादेश उदात्तेनोदात्तः ।
८.२.६ स्वरितो वाऽनुदात्ते पदादौ ।
८.२.७ नलोपः प्रातिपदिकान्तस्य ।
८.२.८ न ङिसम्बुद्ध्योः ।
८.२.९ मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।
८.२.१० झयः ।
८.२.११ संज्ञायाम् ।
८.२.१२ आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ।
८.२.१३ उदन्वानुदधौ च ।
८.२.१४ राजन्वान् सौराज्ये ।
८.२.१५ छन्दसीरः ।
८.२.१६ अनो नुट् ।
८.२.१७ नाद्घस्य ।
८.२.१८ कृपो रो लः ।
८.२.१९ उपसर्गस्यायतौ ।
८.२.२० ग्रो यङि ।
८.२.२१ अचि विभाषा ।
८.२.२२ परेश्च घाङ्कयोः ।
८.२.२३ संयोगान्तस्य लोपः ।
८.२.२४ रात् सस्य ।
८.२.२५ धि च ।
८.२.२६ झलो झलि ।
८.२.२७ ह्रस्वादङ्गात् ।
८.२.२८ इट ईटि ।
८.२.२९ स्कोः संयोगाद्योरन्ते च ।
८.२.३० चोः कुः ।
८.२.३१ हो ढः ।
८.२.३२ दादेर्धातोर्घः ।
८.२.३३ वा द्रुहमुहष्णुहष्णिहाम् ।
८.२.३४ नहो धः ।
८.२.३५ आहस्थः ।
८.२.३६ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ।
८.२.३७ एकाचो बशो भष् झषन्तस्य स्ध्वोः ।
८.२.३८ दधस्तथोश्च ।
८.२.३९ झलां जशोऽन्ते ।
८.२.४० झषस्तथोर्धोऽधः ।
८.२.४१ षढोः कः सि ।
८.२.४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।
८.२.४३ संयोगादेरातो धातोर्यण्वतः ।
८.२.४४ ल्वादिभ्यः ।
८.२.४५ ओदितश्च ।
८.२.४६ क्षियो दीर्घात् ।
८.२.४७ श्योऽस्पर्शे ।
८.२.४८ अञ्चोऽनपादाने ।
८.२.४९ दिवोऽविजिगीषायाम् ।
८.२.५० निर्वाणोऽवाते ।
८.२.५१ शुषः कः ।
८.२.५२ पचो वः ।
८.२.५३ क्षायो मः ।
८.२.५४ प्रस्त्योऽन्यतरस्याम् ।
८.२.५५ अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ।
८.२.५६ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ।
८.२.५७ न ध्याख्यापॄमूर्छिमदाम् ।
८.२.५८ वित्तो भोगप्रत्यययोः ।
८.२.५९ भित्तं शकलम् ।
८.२.६० ऋणमाधमर्ण्ये ।
८.२.६१ नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ।
८.२.६२ क्विन्प्रत्ययस्य कुः ।
८.२.६३ नशेर्वा ।
८.२.६४ मो नो धातोः ।
८.२.६५ म्वोश्च ।
८.२.६६ ससजुषो रुः ।
८.२.६७ अवयाःश्वेतवाःपुरोडाश्च ।
८.२.६८ अहन् ।
८.२.६९ रोऽसुपि ।

८.२.७० अम्नरूधरवरित्युभयथा छन्दसि ।
८.२.७१ भुवश्च महाव्याहृतेः ।
८.२.७२ वसुस्रंसुध्वंस्वनडुहां दः ।
८.२.७३ तिप्यनस्तेः ।
८.२.७४ सिपि धातो रुर्वा ।
८.२.७५ दश्च ।
८.२.७६ र्वोरुपधाया दीर्घ इकः ।
८.२.७७ हलि च ।
८.२.७८ उपधायां च ।
८.२.७९ न भकुर्छुराम् ।
८.२.८० अदसोऽसेर्दादु दो मः ।
८.२.८१ एत ईद्बहुवचने ।
८.२.८२ वाक्यस्य टेः प्लुत उदात्तः ।
८.२.८३ प्रत्यभिवादेअशूद्रे ।
८.२.८४ दूराद्धूते च ।
८.२.८५ हैहेप्रयोगे हैहयोः ।
८.२.८६ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ।
८.२.८७ ओमभ्यादाने ।
८.२.८८ ये यज्ञकर्मणि ।
८.२.८९ प्रणवष्टेः ।
८.२.९० याज्याऽन्तः ।
८.२.९१ ब्रूहिप्रेस्यश्रौषड्वौषडावहानामादेः ।
८.२.९२ अग्नीत्प्रेषणे परस्य च ।
८.२.९३ विभाषा पृष्टप्रतिवचने हेः ।
८.२.९४ निगृह्यानुयोगे च ।
८.२.९५ आम्रेडितं भर्त्सने ।
८.२.९६ अङ्गयुक्तं तिङ् आकाङ्क्षम् ।
८.२.९७ विचार्यमाणानाम् ।
८.२.९८ पूर्वं तु भाषायाम् ।
८.२.९९ प्रतिश्रवणे च ।
८.२.१०० अनुदात्तं प्रश्नान्ताभिपूजितयोः ।
८.२.१०१ चिदिति चोपमाऽर्थे प्रयुज्यमाने ।
८.२.१०२ उपरिस्विदासीदिति च ।
८.२.१०३ स्वरितमाम्रेडितेऽसूयासम्मतिकोपकुत्सनेषु ।
८.२.१०४ क्षियाऽऽशीःप्रैषेषु तिङ् आकाङ्क्षम् ।
८.२.१०५ अनन्त्यस्यापि प्रश्नाख्यानयोः ।
८.२.१०६ प्लुतावैच इदुतौ ।
८.२.१०७ एचोऽप्रगृह्यस्यादूराद्धूते
पूर्वस्यार्धस्यादुत्तरस्येदुतौ ।
८.२.१०८ तयोर्य्वावचि संहितायाम् ।
८.३.१ मतुवसो रु सम्बुद्धौ छन्दसि ।
८.३.२ अत्रानुनासिकः पूर्वस्य तु वा ।
८.३.३ आतोऽटि नित्यम् ।
८.३.४ अनुनासिकात् परोऽनुस्वारः ।
८.३.५ समः सुटि ।
८.३.६ पुमः खय्यम्परे ।
८.३.७ नश्छव्यप्रशान् ।
८.३.८ उभयथर्क्षु ।
८.३.९ दीर्घादटि समानपदे ।
८.३.१० नॄन् पे ।
८.३.११ स्वतवान् पायौ ।
८.३.१२ कानाम्रेडिते ।
८.३.१३ ढो ढे लोपः ।
८.३.१४ रो रि ।
८.३.१५ खरवसानयोर्विसर्जनीयः ।
८.३.१६ रोः सुपि ।
८.३.१७ भोभगोऽघोऽपूर्वस्य योऽशि ।
८.३.१८ व्योर्लघुप्रयत्नतरः शाकटायनस्य ।
८.३.१९ लोपः शाकल्यस्य ।
८.३.२० ओतो गार्ग्यस्य ।
८.३.२१ उञि च पदे ।
८.३.२२ हलि सर्वेषाम् ।
८.३.२३ मोऽनुस्वारः ।
८.३.२४ नश्चापदान्तस्य झलि ।
८.३.२५ मो राजि समः क्वौ ।
८.३.२६ हे मपरे वा ।
८.३.२७ नपरे नः ।
८.३.२८ ङ्णोः कुक्टुक् शरि ।
८.३.२९ डः सि धुट् ।
८.३.३० नश्च ।
८.३.३१ शि तुक् ।
८.३.३२ ङमो ह्रस्वादचि ङमुण्नित्यम् ।
८.३.३३ मय उञो वो वा ।
८.३.३४ विसर्जनीयस्य सः ।
८.३.३५ शर्परे विसर्जनीयः ।
८.३.३६ वा शरि ।
८.३.३७ कुप्वोः X कX पौ च ।
८.३.३८ सोऽपदादौ ।
८.३.३९ इणः षः ।
८.३.४० नमस्पुरसोर्गत्योः ।
८.३.४१ इदुदुपधस्य चाप्रत्ययस्य ।
८.३.४२ तिरसोऽन्यतरस्याम् ।
८.३.४३ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ।
८.३.४४ इसुसोः सामर्थ्ये ।
८.३.४५ नित्यं समासेऽनुत्तरपदस्थस्य ।
८.३.४६ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य ।

८.३.४७ अधःशिरसी पदे ।
८.३.४८ कस्कादिषु च ।
८.३.४९ छन्दसि वाऽप्राम्रेडितयोः ।
८.३.५० कःकरत्करतिकृधिकृतेष्वनदितेः ।
८.३.५१ पञ्चम्याः परावध्यर्थे ।
८.३.५२ पातौ च बहुलम् ।
८.३.५३ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ।
८.३.५४ इडाया वा ।
८.३.५५ अपदान्तस्य मूर्धन्यः ।
८.३.५६ सहेः साडः सः ।
८.३.५७ इण्कोः ।
८.३.५८ नुम्विसर्जनीयशर्व्यवायेऽपि ।
८.३.५९ आदेशप्रत्यययोः ।
८.३.६० शासिवसिघसीनां च ।
८.३.६१ स्तौतिण्योरेव षण्यभ्यासात् ।
८.३.६२ सः स्विदिस्वदिसहीनां च ।
८.३.६३ प्राक्सितादड्व्यवायेऽपि ।
८.३.६४ स्थाऽऽदिष्वभ्यासेन चाभ्यासय ।
८.३.६५ उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनय-
सेधसिचसञ्जस्वञ्जाम् ।
८.३.६६ सदिरप्रतेः ।
८.३.६७ स्तम्भेः ।
८.३.६८ अवाच्चालम्बनाविदूर्ययोः ।
८.३.६९ वेश्च स्वनो भोजने ।
८.३.७० परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् ।
८.३.७१ सिवादीनां वाऽड्व्यवायेऽपि ।
८.३.७२ अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ।
८.३.७३ वेः स्कन्देरनिष्ठायाम् ।
८.३.७४ परेश्च ।
८.३.७५ परिस्कन्दः प्राच्यभरतेषु ।
८.३.७६ स्फुरतिस्फुलत्योर्निर्निविभ्यः ।
८.३.७७ वेः स्कभ्नातेर्नित्यम् ।
८.३.७८ इणः षीध्वंलुङ्लिटां धोऽङ्गात् ।
८.३.७९ विभाषेटः ।
८.३.८० समासेऽङ्गुलेः सङ्गः ।
८.३.८१ भीरोः स्थानम् ।
८.३.८२ अग्नेः स्तुत्स्तोमसोमाः ।
८.३.८३ ज्योतिरायुषः स्तोमः ।
८.३.८४ मातृपितृभ्यां स्वसा ।
८.३.८५ मातुःपितुर्भ्यामन्यतरस्याम् ।
८.३.८६ अभिनिसः स्तनः शब्दसंज्ञायाम् ।
८.३.८७ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ।
८.३.८८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः ।
८.३.८९ निनदीभ्यां स्नातेः कौशले ।
८.३.९० सूत्रं प्रतिष्णातम् ।
८.३.९१ कपिष्ठलो गोत्रे ।
८.३.९२ प्रष्ठोऽग्रगामिनि ।
८.३.९३ वृक्षासनयोर्विष्टरः ।
८.३.९४ छन्दोनाम्नि च ।
८.३.९५ गवियुधिभ्यां स्थिरः ।
८.३.९६ विकुशमिपरिभ्यः स्थलम् ।
८.३.९७ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जि-
पुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।
८.३.९८ सुषामादिषु च ।
८.३.९९ एति संज्ञायामगात् ।
८.३.१०० नक्षत्राद्वा ।
८.३.१०१ ह्रस्वात् तादौ तद्धिते ।
८.३.१०२ निसस्तपतावनासेवने ।
८.३.१०३ युष्मत्तत्ततक्षुःष्वन्तःपादम् ।
८.३.१०४ यजुष्येकेषाम् ।
८.३.१०५ स्तुतस्तोमयोश्छन्दसि ।
८.३.१०६ पूर्वपदात् ।
८.३.१०७ सुञः ।
८.३.१०८ सनोतेरनः ।
८.३.१०९ सहेः पृतनर्ताभ्यां च ।
८.३.११० न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ।
८.३.१११ सात्पदाद्योः ।
८.३.११२ सिचो यङि ।
८.३.११३ सेधतेर्गतौ ।
८.३.११४ प्रतिस्तब्धनिस्तब्धौ च ।
८.३.११५ सोढः ।
८.३.११६ स्तम्भुसिवुसहां चङि ।
८.३.११७ सुनोतेः स्यसनोः ।
८.३.११८ सदिष्वञ्जोः परस्य लिटि ।
८.३.११९ निव्यभिभ्योऽड्व्यावये वा छन्दसि ।
८.४.१ रषाभ्यां नो णः समानादे ।
८.४.२ अट्कुप्वाङ्नुम्व्यवायेऽपि ।
८.४.३ पूर्वपदात् संज्ञायामगः ।
८.४.४ वनं पुरगामिश्रकासिध्रकाशारिकाकोटराऽग्रेभ्यः ।
८.४.५ प्रनिरन्तःशरेक्षुप्लक्षाम्रकार्ष्यखदिर-
पियूक्षाभ्योऽसंज्ञायामपि ।
८.४.६ विभाषौषधिवनस्पतिभ्यः ।
८.४.७ अह्नोऽदन्तात् ।
८.४.८ वाहनमाहितात् ।
८.४.९ पानं देशे ।
८.४.१० वा भावकरणयोः ।

८.४.११ प्रातिपदिकान्तनुम्विभक्तिषु च ।
८.४.१२ एकाजुत्तरपदे णः ।
८.४.१३ कुमति च ।
८.४.१४ उपसर्गादसमासेऽपि णोपदेशस्य ।
८.४.१५ हिनुमीना ।
८.४.१६ आनि लोट् ।
८.४.१७ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ।
८.४.१८ शेषे विभाषाऽकखादावषान्त उपदेशे ।
८.४.१९ अनितेः ।
८.४.२० अन्तः ।
८.४.२१ उभौ साभ्यासस्य ।
८.४.२२ हन्तेरत्पूर्वस्य ।
८.४.२३ वमोर्वा ।
८.४.२४ अन्तरदेशे ।
८.४.२५ अयनं च ।
८.४.२६ छन्दस्यृदवग्रहात् ।
८.४.२७ नश्च धातुस्थोरुषुभ्यः ।
८.४.२८ उपसर्गाद् बहुलम् ।
८.४.२९ कृत्यचः ।
८.४.३० णेर्विभाषा ।
८.४.३१ हलश्च इजुपधात् ।
८.४.३२ इजादेः सनुमः ।
८.४.३३ वा निंसनिक्षनिन्दाम् ।
८.४.३४ न भाभूपूकमिगमिप्यायीवेपाम् ।
८.४.३५ षात् पदान्तात् ।
८.४.३६ नशेः षान्तस्य ।
८.४.३७ पदान्तस्य ।
८.४.३८ पदव्यवायेऽपि ।
८.४.३९ क्षुभ्नाऽऽदिषु च ।
८.४.४० स्तोः श्चुना श्चुः ।
८.४.४१ ष्टुना ष्टुः ।
८.४.४२ न पदान्ताट्टोरनाम् ।
८.४.४३ तोः षि ।
८.४.४४ शात् ।
८.४.४५ यरोऽनुनासिकेऽनुनासिको वा ।
८.४.४६ अचो रहाभ्यां द्वे ।
८.४.४७ अनचि च ।
८.४.४८ नादिन्याक्रोशे पुत्रस्य ।
८.४.४९ शरोऽचि ।
८.४.५० त्रिप्रभृतिषु शाकटायनस्य ।
८.४.५१ सर्वत्र शाकल्यस्य ।
८.४.५२ दीर्घादाचार्याणाम् ।
८.४.५३ झलां जश् झशि ।
८.४.५४ अभ्यासे चर्च्च ।
८.४.५५ खरि च ।
८.४.५६ वाऽवसाने ।
८.४.५७ अणोऽप्रगृह्यस्यानुनासिकः ।
८.४.५८ अनुस्वारस्य ययि परसवर्णः ।
८.४.५९ वा पदान्तस्य ।
८.४.६० तोर्लि ।
८.४.६१ उदः स्थास्तम्भोः पूर्वस्य ।
८.४.६२ झयो होऽन्यतरस्याम् ।
८.४.६३ शश्छोऽटि ।
८.४.६४ हलो यमां यमि लोपः ।
८.४.६५ झरो झरि सवर्णे ।
८.४.६६ उदात्तादनुदात्तस्य स्वरितः ।
८.४.६७ नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम् ।
८.४.६८ अ अ इति ।

इति

---

Proofread by Dhananjay Vaidya dvaidya1 @at@ jhmi.edu

---

Please send corrections to sanskrit@cheerful.com
Last updated March 28, 2004